कणित्वा, काणयित्वा, चिकणिषित्वा, चङ्कणित्वा ;
सङ्कण्य, सङ्काण्य, सञ्चिकणिष्य, सञ्चङ्कण्य ;
काणम् २, कणित्वा २, } काणम् २, काणयित्वा २, } चिकणिषम् २, चिकणिषित्वा २, } चङ्कणम् २ ; चङ्कणित्वा २; }
[1]कण्ठः, [2]कण्वः.

(158) **"कण गतौ"** (I-भ्वादिः-794. सक. सेट्. पर.) **घटादिः।**
अस्य धातोः पूर्वोक्तणतिवत् (157) शुद्धात्-सन्नन्तात्-यङन्ताच्च रूपाणि ज्ञेयानि। ण्यन्ते परम्—

[3]कणकः-णिका, ईषत्कणः-दुष्कणः-सुकणः ;
कणयिता-त्री, कण्यमानः ;
[A]कणयन्-न्ती, कणः ;
कणयिष्यन्-न्ती-ती, कणयितुम् ;
कणयमानः, कणना ;
कणयिष्यमाणः, कणनम् ;
कणितः-तवान्, कणयित्वा ;
कणयिषुः, [5]प्रकणय्य ;
कणयितव्यम्, [6]कणम् २ ; काणम् २ ; काणयित्वा २ ; }
कणनीयम्,
[4]कण्यम्,

इति रूपाणीति विशेषः। एतच्च गत्यर्थकत्वे एव (धातूनामनेकार्थकत्वात्)। अन्यार्थकत्वे तु काणयिता इत्यादीनि रूपाण्येव, पूर्ववत्।

1. औणादिके (द. उ. 5-6) ठप्रत्यये रूपम्। **कण्ठः**=गलः।
2. औणादिके (द. उ. 8-125) क्वन् प्रत्यये रूपम्। **कण्वं**=पापम्। **कण्वः**=ऋषिः।
3. घटादिपाठात् मित्त्वम्। 'मितां ह्रस्वः' (6-4-92) इति ह्रस्वः।
4. 'अचो यत्' (3-1-97) इति यत्।
5. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः।
6. 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (6-4-93) इति णमुलि दीर्घो वा।
A. 'अगन्मनीषः **कणयन्** मुकुन्दमस्मान् वियोगं रणयन् स दूतः।
चणन् विषादं विशणन् विचिन्तां श्रणन् विमोहं श्रथितोऽस्तु सद्यः॥' धा. का. 2.9.



(159) **"कण निमीलने"** (X-चुरादिः-1716. सक. सेट्. उभ.)
'कणेः कणति शब्दार्थे, काणयेण्णौ निमीलने।' (श्लो. 90) इति **देवः।**

काणकः-णिका, चिकाणयिषकः-षिका ;
काणयिता-त्री, चिकाणयिषिता-त्री ;
काणयन्-न्ती, चिकाणयिषन्-न्ती ;
काणयिष्यन्-न्ती-ती, चिकाणयिषिष्यन्-न्ती-ती ;
काणयमानः, चिकाणयिषमाणः ;
काणयिष्यमाणः, चिकाणयिषिष्यमाणः ;
काण्-काणौ-काणः, —
काणितम्-तः, चिकाणयिषितः-तवान् ;
[A]काणः[1], चिकाणयिषुः ;
काणयितव्यम्, चिकाणयिषितव्यम् ;
काणनीयम्, चिकाणयिषणीयम् ;
काण्यम्, चिकाणयिष्यम् ;
ईषत्काणः-दुष्काणः-सुकाणः ; —
काण्यमानः, चिकाणयिष्यमाणः ;
काणः, चिकाणयिषः ;
काणयितुम्, चिकाणयिषितुम् ;
काणना, चिकाणयिषा ;
काणनम्, चिकाणयिषणम् ;
काणयित्वा, चिकाणयिषित्वा ;
सङ्काण्य, सञ्चिकाणयिष्य ;
काणम् २, काणयित्वा २, } चिकाणयिषम् २ ; चिकाणयिषित्वा २. }

1. स्वभावात् एकस्य नेत्रस्य दर्शनशक्तिराहित्ये एवायं प्रयुज्यते।
A. 'सञ्चर्चयन् अपनयानथ बुक्कयिष्णुः श्वेवोग्रशब्दनपरः करुद्ध**काणः।**
मल्लो जिजम्भिषुरसूदितवीर्यमीशं मुष्ट्या जनास बहु पाशितवांश्च दोष्णा॥'
धा. का. 3-38.

## (160) " कत्थ श्लाघायाम् " (I-भ्वादि:-37. अक. सेट्. आत्म.)

श्लाघा-गुणारोप:, इति क्षीरस्वामी ।

| | | | |
|---|---|---|---|
| कत्थक:-त्थिका, | कत्थक:-त्थिका, | चिकत्थिषक:-षिका, | चाकत्थक:-त्थिका ; |
| कत्थिता-त्री, | कत्थयिता-त्री, | चिकत्थिषिता-त्री, | चाकत्थिता-त्री ; |
| — | कत्थयन्-न्ती, | कत्थयिष्यन्-न्ती-ती ; | — |
| विकत्थमान:, | कत्थयमान:, | चिकत्थिषमाण:, | चाकत्थ्यमान: ; |
| कत्थिष्यमाण:, | कत्थयिष्यमाण:, | चिकत्थिषिष्यमाण:, | चाकत्थिष्यमाण: ; |
| [1]कत्-कत्थौ-कत्थ: ; | — | — | — |
| कत्थितम्-त:, | कत्थितम्-त:, | चिकत्थिषित:, | चाकत्थित:-तवान् ; |
| कत्थ:, [2]विकत्थी,[A] विकत्थन:,[3] | | चिकत्थिषु:, चिकत्थयिषु:, | चाकत्थ: ; |
| कत्थितव्यम्, | कत्थयितव्यम्, | चिकत्थिषितव्यम्, | चाकत्थितव्यम् ; |
| कत्थनीयम्, | कत्थनीयम्, | चिकत्थिषणीयम्, | चाकत्थनीयम् ; |
| कत्थ्यम्, | कत्थ्यम्, | चिकत्थिष्यम्, | चाकत्थ्यम् ; |
| ईषत्कत्थ:-दुष्कत्थ:-सुकत्थ: ; | | — | — |
| कत्थ्यमान:, | कत्थ्यमान:, | चिकत्थिष्यमाण:, | चाकत्थ्यमान: ; |
| कत्थ:, | कत्थ:, | चिकत्थिष:, | चाकत्थ: ; |
| कत्थितुम्, | कत्थयितुम्, | चिकत्थिषितुम्, | चाकत्थितुम् ; |
| कत्था, | कत्थना, | चिकत्थिषा, चिकत्थयिषा, | चाकत्था ; |
| [B]कत्थनम्, | कत्थनम्, | चिकत्थिषणम्, | चाकत्थनम् ; |
| कत्थित्वा, | कत्थयित्वा, | चिकत्थिषित्वा, | चाकत्थित्वा ; |
| विकत्थ्य, | विकत्थ्य, | प्रचिकत्थिष्य, | प्रचाकत्थ्य ; |
| कत्थम् २ / कत्थित्वा २ | कत्थम् २ / कत्थयित्वा २ | चिकत्थिषम् २ / चिकत्थिषित्वा २ | चाकत्थम् २ ; / चाकत्थित्वा २ ; |

1. ' संयोगान्तस्य लोप: ' (8-2-23) इति थकारस्य लोप: ।
2. ' वौ कषलषकत्थस्रम्भ: ' (3-2-143) इति ताच्छीलिको घिनुण् ।
3. ' अनुदात्तेतश्च हलादे: ' (3-2-149) इति युच् ताच्छीलिक: ।
' वाऽसरूपोऽस्त्रियाम् ' (3-1-94) इत्यनेन कदाचित् युजपि ।

A. ' **विकत्थी** याचते प्रत्तमविस्रम्भी मुहुर्जलम् ।' भ. का 7-11.

B. ' स वेथते स्माखिलवेथितं विधिं प्रश्रन्थितग्रन्थनधीर**कत्थन:** ।
अतेन्मुरारिर्मम चिन्मयोऽन्तिके च्योतन् दिश: प्रश्च्युतितै: स्मितामृतै: ॥ '
धा. का. 1-6.



## (161) " कत्र शैथिल्ये " (X-चुरादि:-1915. सक. सेट्. उभ.)(अ)

अदन्त: ।

अदन्तपाठसामर्थ्यात् णिचो वैकल्पिकत्वम् । अन्यथा उपधाकार्याभावात् अदन्तपाठो व्यर्थ: स्यात् ।

कत्रक:-त्रिका, चिकत्रयिषक:-षिका, कत्रक:-त्रिका, [1]चिकत्रिषक:-षिका ;[2]

कत्रयिता-त्री, चिकत्रयिषिता-त्री, कत्रिता-त्री, चिकत्रिषिता-त्री ;

कत्रयन्-न्ती, चिकत्रयिषन्-न्ती, कत्रन्-न्ती, चिकत्रिषन्-न्ती ;

कत्रयमाण:, चिकत्रयिषमाण: ; —

कत्रयिष्यन्-न्ती-ती, चिकत्रयिषिष्यन्-न्ती-ती, कत्रिष्यन्-न्ती-ती, चिकत्रिषिष्यन्-न्ती-ती ;

कत्रयिष्यमाण:, चिकत्रयिषिष्यमाण: ; —

[3]कत् ; — —

कत्रितम्-[A]त:, चिकत्रयिषित:, कत्रित:, चिकत्रिषित:-तवान् ;

कत्र:, चिकत्रयिषु:, कत्र:, चिकत्रिषु: ; —

कत्रयितव्यम्, चिकत्रयिषितव्यम्, कत्रितव्यम्, चिकत्रिषितव्यम् ;

कत्रणीयम्, चिकत्रयिषणीयम्, कत्रणीयम्, चिकत्रिषणीयम् ;

कत्र्यम्, चिकत्रयिष्यम्, कत्र्यम्, चिकत्रिष्यम् ;

ईषत्कत्र:-दुष्कत्र:-सुकत्र: ; —

कत्र्यमाण:, चिकत्रयिष्यमाण:, कत्र्यमाण:, चिकत्रिष्यमाण: ;

कत्र:, चिकत्रयिष:, कत्र:, चिकत्रिष: ; —

कत्रयितुम्, चिकत्रयिषितुम्, कत्रितुम्, चिकत्रिषितुम् ;

कत्रणा, चिकत्रयिषा, कत्रा, चिकत्रिषा ; —

(अ) ' **कर्त** ' इति **क्षीरस्वाम्या**दिसम्मत: पाठ: ।

1. णिजभावपक्षे केवलधातोस्सनि रूपम् ।
2. णिजभावपक्षे अनेकाच्त्वाद्धातो: यङ् न ।
3. ' संयोगान्तलोपे—यण: प्रतिषेधो वाच्य: ; न वा झलो लोपात् ; बहिरङ्गलक्षणत्वाद्वा ' (वा. 8-2-23) इति **भाष्य**पर्यालोचनया—' कलत्रमाचक्षाण: ' इत्यत्रैव अकृत्रिमयणघटितानां प्रयोगाणां—**शब्दरत्नकारै**रनभिधानं प्रपञ्चितमिह स्मर्तव्यम् ।

A. ' दुष्पारदुश्चरिततीरणकृद्यथेशो नो चक्षमे पुटयितुं तम**कत्रितो**ष्मा ॥ '
धा. का. 5-93.

कत्रणम् , चिकत्रयिषणम् , कत्रणम् , चिकत्रिषणम् ;
कत्रयित्वा, चिकत्रयिषित्वा, कत्रित्वा, चिकत्रिषित्वा ;
सङ्कत्र्य, सञ्चिकत्रयिष्य, संकत्र्य, सञ्चिकत्रिष्य ;

| | | | |
|---|---|---|---|
| कत्रम् २, कत्रयित्वा २, | चिकत्रयिषम् २, चिकत्रयिषित्वा २, | कत्रम् २, कत्रित्वा २, | चिकत्रिषम् २, चिकत्रिषित्वा २. |

## (162) "कथ वाक्यप्रबन्धे" (X-चुरादिः-1852. सक. सेट्. उभ.)

अदन्तः ।

| | |
|---|---|
| कथकः[1]-थिका, | चिकथयिषकः-षिका ; |
| कथयिता-त्री, | चिकथयिषिता-त्री ; |
| कथयन्-न्ती, | चिकथयिषन्-न्ती ; |
| कथयिष्यन्-न्ती-ती, | चिकथयिषिष्यन्-न्ती-ती ; |
| कथयमानः, | चिकथयिषमाणः ; |
| कथयिष्यमाणः, | चिकथयिषिष्यमाणः ; |
| कत्-कद्-कथौ-कथः ; | — |
| कथितम्-तः, | चिकथयिषितः-तवान् ; |
| कथः, | चिकथयिषुः ; |
| कथयितव्यम् , | चिकथयिषितव्यम् ; |
| [A]कथनीयम् , | चिकथयिषणीयम् ; |
| कथ्यम् , | चिकथयिष्यम् ; |
| ईषत्कथः-दुष्कथः-सुकथः ; | — |
| कथ्यमानः, | चिकथयिष्यमाणः ; |
| कथः, | चिकथयिषः ; |
| कथयितुम् , | चिकथयिषितुम् ; |
| [2]कथा[B], | चिकथयिषा ; |

1. धातोरदन्तत्वात् , अल्लोपस्य स्थानिवद्भावादुपधावृद्धिर्न ।
2. 'चिन्तिपूजिकथिकुम्बिचर्चश्च' (3-3-105) इत्यङ् युजपवादः ।

A. 'प्रष्टव्यं पृच्छतस्तस्य **कथनीयम**वीवचत् । आत्मानं वनवासं च जेयं चारिं रघूत्तमः ॥' भ. का. 6-46.

B. 'चिन्तावन्तः **कथां** चक्रुरुपधाभेदभीरवः ।
अकुर्वत नृतेः कर्थं पूजां लप्स्यामहे कथम् ॥' भ. का. 7-72.



| | |
|---|---|
| कथनम् , | चिकथयिषणम् ; |
| कथयित्वा, | चिकथयिषित्वा ; |
| [1]प्रकथय्य[A], | प्रचिकथयिष्य ; |
| कथम् २, कथयित्वा २, | चिकथयिषम् २ ; चिकथयिषित्वा २. |

## (163) "कदि आह्वाने रोदने च" (I-भ्वादिः-70. सक. सेट्. पर.)

आह्वाने सकर्मकः, अन्यत्राकर्मकः ।

'आह्वाने रोदने क्रन्देः कन्देः क्रन्दति कन्दति । वैक्लव्ये तु तयोर्घात्वोः क्रन्दते कन्दते मितोः ॥' (श्लो-105) इति **देवः** ।

| | | | |
|---|---|---|---|
| [2]कन्दकः-न्दिका, | कन्दकः-न्दिकाः, | चिकन्दिषकः-षिका, | चाकन्दकः-न्दिका ; |
| कन्दिता-त्री, | कन्दयिता-त्री, | चिकन्दिषिता-त्री, | चाकन्दिता-त्री ; |
| कन्दन्-न्ती, | कन्दयन्-न्ती, | चिकन्दिषन्-न्ती ; | — |
| कन्दिष्यन्-न्ती-ती, | कन्दयिष्यन्-न्ती-ती, | चिकन्दिषिष्यन्-न्ती-ती ; | |
| कन्दयमानः, | कन्दयिष्यमाणः, | चाकन्द्यमानः, | चाकन्दिष्यमाणः ; |
| कन्-कन्दौ-कन्दः ; | — | — | — |
| कन्दितम्-तः, | [B]कन्दितः-तं, | चिकन्दिषितः, | चाकन्दितः-तवान् ; |
| कन्दः, कन्दः, | आकन्दी,[3] चिकन्दिषुः, | चिकन्दयिषुः, | चाकन्दः ; |
| कन्दितव्यम्, | कन्दयितव्यम्, | चिकन्दिषितव्यम् , | चाकन्दितव्यम् ; |
| कन्दनीयम् , | कन्दनीयम् , | चिकन्दिषणीयम् , | चाकन्दनीयम् ; |
| कन्द्यम् , | कन्द्यम् , | चिकन्दिष्यम् , | चाकन्द्यम् ; |
| ईषत्कन्दः,-दुष्कन्दः-सुकन्दः ; | | — | — |
| कन्द्यमानः, | कन्द्यमानः, | चिकन्दिष्यमाणः, | चाकन्द्यमानः ; |

1. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
2. 'इदितो नुम् धातोः' (7-1-58) इति नुम् ।
3. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनिः ।

A. 'ग्रामेयकैर्नागरकैश्च लोकैर्निरीक्ष्यमाणा सह राजकीयैः ।
कर्मन्दिवन्द्या **प्रकथय्य** सैवं तिरोदधेऽनु स्तनयित्नुपद्याम् ॥' वा. वि. 3- 55.

B. 'मनोज्ञगण्डं तमनिन्दितानन नन्दात्मजं शारदचन्द्रशीतलम् ।
पराक्रमत्रन्दन**कन्दिता**सुरं संक्रन्दनक्रन्दितमीक्षितास्महे ॥' धा. का. 1-10.

कन्दः, कन्दः, चिकन्दिषः, चाकन्दः ;
कन्दितुम्, कन्दयितुम्, चिकन्दिषितुम्, चाकन्दितुम् ;
कन्दा, कन्दना, चिकन्दिषा, चिकन्दयिषा, चाकन्दा ;
कन्दनम्, कन्दनम्, चिकन्दिषणम्, चाकन्दनम् ;
कन्दित्वा, कन्दयित्वा, चिकन्दिषित्वा, चाकन्दित्वा ;
सङ्कन्द्य, संकन्द्य, सञ्चिकन्दिष्य, सञ्चाकन्द्य ;
कन्दम् २ } कन्दम् २ } चिकन्दिषम् २ } चाकन्दम् २ }
कन्दित्वा २ } कन्दयित्वा२ } चिकन्दिषित्वा २ } चाकन्दित्वा २. }

## (164) "कदि वैक्लव्ये" (I-भ्वादिः-772. अक. सेट्. आत्म.)

[A]घटादिः षित् च ।

'आह्वाने रोदने क्रन्देः कन्देः क्रन्दति कन्दति ।
वैक्लव्ये तु तयोर्धात्वोः क्रन्दते कन्दते मितोः ॥
मित्त्वार्थपाठसामर्थ्यात् तयोर्दीर्घविकल्पनम् ।
भवेच्चिण्णमुलोस्तस्मादक्रान्द्यकन्दि सिध्यतः ॥'
(श्लो-105-106.) इति देवः ।

'कदि आह्वाने रोदने च' (163) इति धातोरेव, अर्थविशेषे आत्मनेपदार्थं मित्त्वार्थं चानुवादो घटादौ ॥

कन्दकः-न्दिका, कन्दकः-न्दिका, चिकन्दिषकः-षिका, चाकन्दकः-न्दिका ;
कन्दिता-त्री, कन्दयिता-त्री, चिकन्दिषिता-त्री, चाकन्दिता-त्री ;
— कन्दयन्-न्ती, कन्दयिष्यन्-न्ती-ती ; —
कन्दमानः, कन्दयमानः, चिकन्दिषमाणः, चाकन्द्यमानः ;
कन्दिष्यमाणः, कन्दयिष्यमाणः, चिकन्दिषिष्यमाणः, चाकन्दिष्यमाणः ;
कन्-कन्दौ-कन्दः ; — — —
कन्दितं-तः, [1]कन्दितः-तम्, चिकन्दिषितः, चाकन्दितः-तवान् ;
कन्दः, कन्दः, चिकन्दिषुः, चिकन्दयिषुः, चाकन्दः ;

---

1. 'निष्ठायां सेटि' (6-4-52) इति णेर्लोपः ।
A. 'घटादिषु त्विहापूर्वपठितास्सर्वदा मितः । बहिस्स्थस्येह पाठे तु मित्त्वमुक्तेऽर्थ एव हि' ॥ (धातुकाव्यव्याख्याने) इत्यनेन न्यायेन वैकल्ये एव मित्त्वप्रयुक्तं कार्यम् । आह्वानरोदनयोस्तु मित्त्वं न ।



कन्दितव्यम्, कन्दयितव्यम्, चिकन्दिषितव्यम्, चाकन्दितव्यम् ;
कन्दनीयम्, [1]कन्दनीयम्, चिकन्दिषणीयम्, चाकन्दनीयम् ;
कन्द्यम्, कन्द्यम्, चिकन्दिष्यम्, चाकन्द्यम् ;
ईषत्कन्दः-दुष्कन्दः-सुकन्दः ; — —
कन्द्यमानः, कन्द्यमानः, चिकन्दिष्यमाणः, चाकन्द्यमानः ;
कन्दः, कन्दः, चिकन्दिषः, चाकन्दः ;
कन्दितुम्, कन्दयितुम्, चिकन्दिषितुम्, चाकन्दितुम् ;
[2]कन्दा, कन्दना, चिकन्दिषा, चिकन्दयिषा, चाकन्दा ;
कन्दनम्, कन्दनम्, चिकन्दिषणम्, चाकन्दनम् ;
कन्दित्वा, कन्दयित्वा, चिकन्दिषित्वा, चाकन्दित्वा ;
सङ्कन्द्य, सङ्कन्द्य, प्रचिकन्दिष्य, प्रचाकन्द्य ;
कन्दम् २, } कन्दम् २, } चिकन्दिषम् २, } चाकन्दम् २ ; }
कन्दित्वा २, } [3]कान्दम् २, } चिकन्दिषित्वा २, } चाकन्दित्वा २. }
कन्दयित्वा २, }

## (165) "कनी दीप्तिकान्तिगतिषु" (I-भ्वादिः-460. सक. सेट्. पर.)

दीप्तिः=प्रकाशः, कान्तिः=शोभा—इति क्षीरस्वामी ।

कानकः-निका, कानकः-निका, चिकनिषकः-षिका, [4]चङ्कनकः-निका ;
कनिता-त्री, कानयिता-त्री, चिकनिषिता-त्री, चङ्कनिता-त्री ;
[A]कनन्-न्ती, कानयन्-न्ती, चिकनिषन्-न्ती ; —
कनिष्यन्-न्ती-ती, कानयिष्यन्-न्ती-ती, चिकनिषिष्यन्-न्ती-ती ;

---

1. 'णेरनिटि' (6-4-51) इति णेर्लोपः ।
2. घटादीनां षित्त्वात् 'षिद्भिदादिभ्यः—' (3-3-104) इति अङ् । 'गुरोश्च—' (3-3-103) इति वा अः प्रत्ययः ।
3. अनुपधात्वेऽपि घटादिषु पाठसामर्थ्यात् 'चिण्णमुलोः—' (6-4-93) इति दीर्घविकल्पः ।
4. 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति अभ्यासस्य नुक् ।
A. 'ध्वणच्छिशून् धाणसमोणिताशुभान् शोणान् पृथुश्रोणिजनो दुदोह च ।
प्रश्लोणितान् प्रैणनविभ्रणत्क्षितीन् अनुल्बणान् धेनुगणान् कनत्स्तनात् ॥'
धा. का. 1-59.

— कानयमानः, कानयिष्यमाणः, चङ्कन्यमानः, चङ्कनिष्यमाणः ;
[1]का-कानौ-कानः ; — — —
[2]कान्तः-न्तं-न्तवान्, कानितं-तः, चिकनिषितः, चङ्कनितः-तवान् ;
कनः, कानः, चिकनिषुः, चिकानयिषुः, चङ्कनः ;
कनितव्यम्, कानयितव्यम्, चिकनिषितव्यम्, चङ्कनितव्यम् ;
कननीयम्, काननीयम्, चिकनिषणीयम्, चङ्कननीयम् ;
कान्यम्, [3]कन्या, कान्यम्, चिकनिष्यम्, चङ्कन्यम् ;
ईषत्कनः-दुष्कनः-सुकनः ; — —
कन्यमानः, कान्यमानः, चिकनिष्यमाणः, चङ्कन्यमानः ;
कानः, कानः, चिकनिषः, चङ्कनः ;
कनितुम्, कानयितुम्, चिकनिषितुम्, चङ्कनितुम् ;
कान्तिः, कानना, चिकनिषा, चिकानयिषा, चङ्कना ;
कननम्, काननम्, चिकनिषणम्, चङ्कननम् ;
कनित्वा, कानयित्वा, चिकनिषित्वा, चङ्कनित्वा ;
सङ्कन्य, सङ्कान्य, प्रचिकनिष्य, प्रचङ्कन्य ;
कानम् २, कनित्वा २, } कानम् २, कानयित्वा २, } चिकनिषम् २, चिकनिषित्वा २, } चङ्कनम् २ ; चङ्कनित्वा २ ; }
[4]कनकम्.

## (166) "कपि चलने" ( I-भ्वादिः. 375-अक. सेट्. आत्म. )

कम्पकः-म्पिका, कम्पकः-म्पिका, चिकम्पिषकः-षिका, चाकम्पकः-म्पिका ;
कम्पिता-त्री, कम्पयिता-त्री, चिकम्पिषिता-त्री, चाकम्पिता-त्री ;
— [5]कम्पयन्-न्ती, कम्पयिष्यन्-न्ती-ती ; —

1. 'अनुनासिकस्य—' (6-4-15) इति दीर्घे नलोपे च रूपम् । एवं क्तिन्प्रत्ययेऽपि ।
2. ईदित्त्वात् निष्ठायां 'श्वीदित—' (7-2-14) इतीण्णिषेधः । दीर्घः ।
3. कनेर्यत्प्रत्यये टापि **कन्या** इति भवति । '**कन्यायाः** कनीन च' (4-1-116) इति निर्देशोऽत्र लिङ्गमिति **माधवधातुवृत्तौ** ।
4. 'क्वुन् शिल्पिसंज्ञयोः' (द. उ. 3-5.) इति क्वुन् ।
5. 'निगरणचलनार्थेभ्यश्च' (1-3-87) इत्यनेन ण्यन्तात् परस्मैपदमेव ।



कम्पमानः, — चिकम्पिषमाणः, चाकम्प्यमानः ;
कम्पिष्यमाणः, — चिकम्पिषिष्यमाणः, चाकम्पिष्यमाणः ;
कन्-कम्पौ-कम्पः ; — — —
कम्पितम्-तः-तवान्, [1]विकपितम्-तः-तवान्, } कम्पितः-तम्, चिकम्पिषितः-चाकम्पितः-तवान् ;
कम्पः, [2]कम्पनः, [3]कम्प्रः,[A] [4]शिरःकम्पी, चिकम्पिषुः, चिकम्पयिषुः, चाकम्पः ;
कम्पितव्यम्, कम्पयितव्यम्, चिकम्पिषितव्यम्, चाकम्पितव्यम् ;
कम्पनीयम्, कम्पनीयम्, चिकम्पिषणीयम्, चाकम्पनीयम् ;
कम्प्यम्, कम्प्यम्, चिकम्पिष्यम्, चाकम्प्यम् ;
ईषत्कम्पः-दुष्कम्पः-सुकम्पः ; — —
कम्प्यमानः, कम्प्यमानः, चिकम्पिष्यमाणः, चाकम्प्यमानः ;
[B]कम्पः, कम्पः, चिकम्पिषः, चाकम्पः ;
कम्पितुम्, कम्पयितुम्, चिकम्पिषितुम्, चाकम्पितुम् ;
कम्पा, कम्पना, चिकम्पिषा, चिकम्पयिषा, चाकम्पा ;
कम्पनम्, कम्पनम्, चिकम्पिषणम्, चाकम्पनम् ;
कम्पित्वा, कम्पयित्वा, चिकम्पिषित्वा, चाकम्पित्वा ;
विकम्प्य, विकम्प्य, प्रचिकम्पिष्य, प्रचाकम्प्य ;
कम्पम् २ कम्पित्वा २ } कम्पम् २ कम्पयित्वा २ } चिकम्पिषम् २ चिकम्पिषित्वा २ } चाकम्पम् २ चाकम्पित्वा २. }

1. 'लंगिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम्–' (वा. 6-4-24) इति नुमो लोपः। अन्यत्र **विकम्पित** इत्येव । यः शिरः असकृत् कम्पयति रोगवशात्—स **विकपितः**। 'पीडाव्याध्योः **प्रदीपो**क्ता लङ्गिकम्प्योर्नलोपिता । निस्स्वो विलगितो नित्यं, वातात् **विकपिता** तनुः ॥' इति **प्र. सर्वस्वे** ।
2. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति, 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति वा युच् ताच्छीलिकः ।
3. '**नमिकम्पि**स्म्यजस—' (3-2-167) इति ताच्छीलिकः रः वासरूपविधिना भवत्येव । 'ताच्छीलिकेषु वासरूपविधिर्नास्तीति प्रायिकं, तेन **कम्प्रा-कम्पना** इति सिद्धम्' इति **सि. कौमुदी** ॥
4. 'सुप्यजातौ णिनिः—(3-2-78) इति णिनिः । अन्तर्भावितण्यर्थोऽयम् ।
A. '**अकम्प्रं** मारुतिर्दीप्रं नम्रः प्रावेशयत् गुहाम् ॥' भ. का. 7-23.
B. '**सकम्प**हेरम्बसमानलम्बनाः समाव्रजन्नम्बितघण्टिकास्तदा ।' धा. का. 1-49.

## (167) " कबृ वर्णे " (I-भ्वादिः-380. अक. सेट्. आत्म.)

वर्णनम्=वर्णः-शुक्लादिः, इति क्षीरस्वामी ।

काबकः-बिका, काबकः-बिका, चिकबिषकः-षिका, चाकबकः-बिका ;
कबिता-त्री, काबयिता-त्री, चिकबिषिता-त्री, चाकबिता-त्री ;
— काबयन्-न्ती, काबयिष्यन्-न्ती-ती; —
कबमानः, काबयमानः, चिकबिषमाणः, चाकब्यमानः ;
कबिष्यमाणः, काबयिष्यमाणः, चिकबिषिष्यमाणः, चाकबिष्यमाणः ;
कप्-कब्-कबौ-कबः ; — — —
कबितम्-तः, काबितः-तम्, चिकबिषितः, चाकबितः-तवान् ;
कबः, काबः, चिकबिषुः, चिकाबयिषुः, चाकबः ;
कबितव्यम्, काबयितव्यम्, चिकबिषितव्यम्, चाकबितव्यम् ;
कबनीयम्, काबनीयम्, चिकबिषणीयम्, चाकबनीयम् ;
[1]कब्यम्, काब्यम्, चिकबिष्यम्, चाकब्यम् ;
ईषत्कबः-दुष्कबः-सुकबः ; — —
कब्यमानः, काब्यमानः, चिकबिष्यमाणः, चाकब्यमानः ;
काबः, काबः, चिकबिषः, चाकबः ;
कबितुम्, काबयितुम्, चिकबिषितुम्, चाकबितुम् ;
कत्तिः, काबना, चिकबिषा, चिकाबयिषा, चाकबा ;
कबनम्, काबनम्, चिकबिषणम्, चाकबनम् ;
कबित्वा, काबयित्वा, चिकबिषित्वा, चाकबित्वा ;
प्रकब्य, प्रकाब्य, प्रचिकबिष्य, प्रचाकब्य ;
काबम् २, कबित्वा २, } काबम् २, काबयित्वा २, } चिकबिषम् २, चिकबिषित्वा २, } चाकबम् २ ; चाकबित्वा २; }
[A]कबर[2]:-[3]री, कर्बुरः.

---

1. 'पोरदुपधात्' (3-1-98.) इति यत् ।
2. कबरः कर्बुरः, इतीमौ औणादिकप्रत्ययान्तौ ।
3. 'जानपद—' (4-1-42.) इत्यादिना केशपाशविषये ङीप् । **कबरी** केशवेशः । अन्यत्र **कबरा** ।

A. 'सकम्पहेरम्बसमानलम्बनाः समाव्रजन् अम्बितघण्टिकास्तदा ।
प्रलम्बसास्नाः **कबरत्विषो** वृषाः अक्षीबिताः क्षीबतयाऽतिशीभराः ॥' धा. का. 1-49.



## (168) " कमु कान्तौ " (I-भ्वादिः-443. सक. सेट्. आत्म.)

कान्तिः=इच्छा ।

[1]कामकः } मिका, [2]कामकः } मिका, कामकः-मिका, [3]चिकामयिषकः-षिका, चिकमिषकः-षिका, } [4]चङ्कामकः-मिका ; चङ्कमकः-मिका ; }
कामयिता-त्री, कमिता-त्री, } कामयिता-त्री, चिकामयिषिता-त्री, चिकमिषिता-त्री, } चङ्कामयिता-त्री ; चङ्कमिता-त्री ; }
— [5]कामयन्-न्ती, कामयिष्यन्-न्ती-ती ; —
[6]कामयमानः, कामयमानः, चिकामयिषमाणः चिकमिषमाणः } चङ्काम्यमानः ; चङ्कम्यमानः ; }
कामयिष्यमाणः, कामयिष्यमाणः, चिकामयिषिष्यमाणः, चिकमिषिष्यमाणः, } चङ्कामयिष्यमाणः ; चङ्कमिष्यमाणः ; }
[7]कान्-कामौ-कामः ; — — —
[8]कामितम्-तः-तवान्, [9]कान्तम्-न्तः-न्तवान्, } कामितम्-तः, चिकामयिषितः, चिकमिषितः, } चङ्कामितः चङ्कमितः } तवान् ;

---

1. '**कमेर्णिङ्**' (3-1-30) इति स्वार्थे णिङ् । अमन्तत्वेन मित्त्वं तु न, '**न कम्य-मिचमाम्**' (ग. सू. भ्वादौ) इति निषेधात् । अतः, 'अत उपधायाः' (7-2-116) इति वृद्धिः । एवं घञ्यपि ।
2. 'आयादय आर्धधातुके वा' (3-1-31) इति णिङो वैकल्पिकत्वात् णिङभावपक्षे, ण्वुलि वृद्धौ रूपम् । 'नोदात्तोपदेशस्य—'(7-3-4) इति निषेधस्तु न; 'अनाचमि-**कमिवमीनाम्**' (वा. 7-3-34) इति निषेधात् ।
3. णिङ्पक्षे रूपम् । एवं सन्नन्ते सर्वत्र बोध्यम् ।
4. यङन्तात् ण्वुलि 'नुगतोऽनुनासिकान्तस्य' (7-4-85) इति अभ्यासे नुक् ।
5. णिजन्तात् 'णिचश्च' (1-3-74) इत्युभयपदी, न तु णिङन्तात् ।
6. शानचः शित्त्वेन आर्धधातुकत्वाभावात् नित्यं णिङ् । णिङो ङित्त्वात् 'अनुदात्तङित आत्मनेपदम्' (1-3-12) इति आत्मनेपदमेव ।
7. णिङन्तात् शुद्धाच्च धातोः क्विपि 'अनुनासिकस्य—' (6-4-15) इति दीर्घः । 'मो नो धातोः' (8-2-64) इति नत्वम् ।
8. णिङ्पक्षे 'णेरनिटि' (6-4-51) इति निष्ठायां णिङो लोपः । सूत्रे '**णेः**' इत्यनेन णिङोऽपि ग्रहणम् ।
9. णिङभावपक्षे, धातोरुदित्त्वात् क्त्वायाम् इड्विकल्पः । तेन 'यस्य विभाषा' (7-2-15) इति निष्ठायामिण्णिषेधे, 'अनुनासिकस्य—' (6-4-15) इति दीर्घे च रूपम् ।

कामः-कमः, [1]प्रकामी, [2]मांसकामः-मांसकामा, [3]हन्तुकामः[A], [B]हरिकामा,
[4]कम्रः[C], [5]कमनः, [6]कामुक[D]:-कामुकी-कामुका, कामः, चिकामयिषुः,
चिकमिषुः, चङ्कामः-चङ्कमः ;

कामयितव्यम्, कमितव्यम्, | कामयितव्यम्, | चिकामयिषितव्यम्, चिकमिषितव्यम्, | चङ्कामयितव्यम् ; चङ्कमितव्यम् ;

[7]प्रकामनीयम्, प्रकमनीयम्, | कामनीयम्, | चिकामयिषणीयम्, चिकमिषणीयम्, | चङ्कामनीयम् ; चङ्कमनीयम् ;

[8]काम्यम्-[9]कम्यम्, काम्यम्, चिकामयिष्यम्, चिकमिष्यम्, चङ्काम्यम्-चङ्कम्यम् ;

ईषत्कामः-दुष्कामः-सुकामः, ईषत्कमः-दुष्कमः-सुकमः ; —

---

1. ताच्छील्ये णिनिः ।
2. 'शीलि**कामि**भक्ष्याचरिभ्यो णः' (वा. 3-2-1) इति अणपवादः णः । तेन स्त्रियां टाप् ।
3. 'तुं **काम**मनसोरपि ।' (वा. 6-3-109) इति तुमुनो मकारस्य लोपः ।
4. 'नमिकम्पिस्म्यजस**कम**हिंसदीपो रः' (3-2-167) इति ताच्छीलिको रः प्रत्ययः ।
5. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः । 'ताच्छीलिकेषु 'वाऽसरूपः—' (3-1-94) इति विधिर्नास्तीति प्रायिकम् ; तेन **कम्रा कमना** युवतिः, इति सिद्धम्—' इति **सि. कौमुदी** ।
6. 'लषपतपदस्थाभू**कम**गम—' (3-2-154) इत्यादिना तच्छीलादिषु उकञ् । स्त्रियां, 'जानपद—' (4-1-42) इति विहितः ङीष् '**कामुकी** मैथुनेच्छा चेत्, **कामुका**ऽन्या,' (वा. 4-1-42) इति वार्तिकेन अर्थविशेषे नियमितः ।
7. 'न भाभूपू**कमि**गमि—' (8-4-34) इति, 'ण्यन्तभादीनामुपसंख्यानम्' (वा. 8-4-34) इति च णत्वनिषेधः ।
8. णिङन्तात्—णिजन्ताच्च 'अचो यत्' (3-1-97) इति यत् ।
9. शुद्धाद्धातोः 'पोरदुपधात्' (3-1-98) इति यत् ।

A. 'इन्द्राबृहस्पत्युपक्लृप्तमन्त्रा उत्साहिनोऽग्नीवरुणौ तथाऽन्ये ।
सुरा भवन्तं बत **हन्तुकामाः** प्रबोधयांचक्रुरधोक्षजं तम् ॥' वा. वि. 2. 33.

B. 'स्तुतिशीला **हरिकामा** फलभक्षा कानने व्रताचारा ।
तदुपग्रहप्रतीक्षा वसति द्वन्द्वक्षमा मुनिश्रेणी ॥' इति **प्र. सर्वस्वे** ।

C. '**कम्रा**भिरावृतः स्त्रीभिराशंसुः क्षेममात्मनः ।
इच्छुः प्रसादं प्रणमन् सुग्रीवः प्रावदन् नृपम् ॥' भ. का. 7-24.

D. 'प्रघिण्य भूषाः परिघुण्य मालिकाः प्रघ्राय घोणापुटघूर्णिचन्दनम् ।
पणाय्यरूपाः पनिताकृतीन् ययुर्भामिन्य एवाक्षमया **स्वकामुकान्** ॥'
भा. का. 1-57.



काम्यमानः, कम्यमानः, | काम्यमानः, | चिकामयिष्यमाणः, चिकमिष्यमाणः, | चङ्काम्यमानः-चङ्कम्यमानः ;

[A]कामः-कामः, कामः, चिकामयिषः, चिकमिषः, चङ्कामः-चङ्कमः ;

कामयितुम्-कमितुम्, कामयितुम्, चिकामयिषितुम्, चिकमिषितुम्, | चङ्कामयितुम् ; चङ्कमितुम् ;

कामना-[B]कान्तिः, कामना, चिकामयिषा-चिकमिषा, [1]चङ्कामा-चङ्कमा ;

कामनम्, कमनम्, | कामनम्, विकामयिषणम्-चिकमिषणम्, चङ्कामनम्-चङ्कमनम् ;

कामयित्वा, [2]कमित्वा, कान्त्वा, | कामयित्वा, | चिकामयिषित्वा चिकमिषित्वा | चङ्कामयित्वा-चङ्कमित्वा ;

प्रकाम्य-प्रकम्य, प्रकाम्य, प्रचिकामयिष्य-प्रचिकमिष्य, प्रचङ्काम्य-प्रचङ्कम्य ;

[3]कामम् २ कामयित्वा २ कामम् २ कमित्वा २ कान्त्वा २ | कामम् २ कामयित्वा २ | चिकामयिषम् २, चिकामयिषित्वा २, चिकमिषम् २, चिकमिषित्वा २, | चङ्कामम् २- चङ्कमम् २ ; चङ्कामयित्वा २- चङ्कमित्वा २ ;

[4]कमठः, [5]कन्तुः, [6]कमलम्, [7]कंसः.

---

1. 'यस्य हलः' (6-4-49) इति यलोपे, अतो लोपे च रूपमेवम् ।
2. णिङभावपक्षे धातोरुदित्त्वात् 'उदितो वा' (7-2-56) इति क्त्वायामिड्विकल्पः । इडभावपक्षे दीर्घं रूपम् ।
3. 'न **कम्यमि**—' (ग. सू. भ्वादौ) इति मित्त्वनिषेधात् णिङन्तात् णिजन्ताच्च न दीर्घविकल्पः ।
4. '**कमे**रठः' (द. उ. 5. 5.) इत्यठः प्रत्ययः । **कमठः**=कूर्मः, भिक्षाभाजनं वा ।
5. औणादिके (द. उ. 1-112) कुप्रत्यये तुगागमः । **कन्तुः**=कामी ।
6. औणादिके (द. उ. 8-107) कलप्रत्यये रूपम् । **कमलम्**=पद्मम् ।
7. औणादिके (द. उ. 9-21.) सप्रत्यये रूपम् ।

A. 'यायास्त्वमिति **कामो** मे गन्तुमुत्सहसे न च ।
इच्छुः **कामयितुं** त्वं माम् इत्यसौ जगदे तया ॥' भ. का. 5-59.

B. 'सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम् ।
**कान्तिं कान्त्या** सदातन्या ह्रेपयन्ती शुचिस्मिता ॥' भ. का. 5-65.

## (169) “कर्ज व्यथने” (I-भ्वादिः-228. सक. सेट्. पर.)

**व्यथनम्**=भयदुःखम्, चलनं च ।

कर्जकः-र्जिका, कर्जकः-र्जिका, चिकर्जिषकः-षिका, चाकर्जकः-र्जिका ;
कर्जिता-त्री, कर्जयिता-त्री, चिकर्जिषिता-त्री, चाकर्जिता-त्री ;
कर्जन्-न्ती, कर्जयन्-न्ती, चिकर्जिषन्-न्ती ; —
कर्जिष्यन्-न्ती-ती, कर्जयिष्यन्-न्ती-ती, चिकर्जिषिष्यन्-न्ती-ती ;
— कर्जयमानः, कर्जयिष्यमाणः, चाकर्ज्यमानः, चाकर्जिष्यमाणः ;

| | | | |
|---|---|---|---|
| [1]कर्क्-कर्ग्-कर्जौ-कर्जः ; | — | — | — |
| [A]कर्जितम्-तः, | कर्जितः-तम्, | चिकर्जिषितः, | चाकर्जितः-तवान् ; |
| कर्जः, [2]कर्जनः, कर्जः, | चिकर्जिषुः, | चिकर्जयिषुः, | चाकर्जः ; |
| [3]प्रनिकर्जितव्यम्, | कर्जयितव्यम्, | चिकर्जिषितव्यम्, | चाकर्जितव्यम् ; |
| कर्जनीयम्, | कर्जनीयम्, | चिकर्जिषणीयम्, | चाकर्जनीयम् ; |
| [4]कर्ज्यम्, | कर्ज्यम्, | चिकर्जिष्यम्, | चाकर्ज्यम् ; |
| ईषत्कर्जः-दुष्कर्जः-सुकर्जः; | | — | — |
| कर्ज्यमानः, | कर्ज्यमानः, | चिकर्जिष्यमाणः, | चाकर्ज्यमानः ; |
| कर्जः, | कर्जः, | चिकर्जिषः, | चाकर्जः ; |
| कर्जितुम्, | कर्जयितुम्, | चिकर्जिषितुम्, | चाकर्जितुम् ; |
| कर्जा, | कर्जना, | चिकर्जिषा, | चाकर्जा ; |
| कर्जनम्, | कर्जनम्, | चिकर्जिषणम्, | चाकर्जनम् ; |
| कर्जित्वा, | कर्जयित्वा, | चिकर्जिषित्वा, | चाकर्जित्वा ; |
| प्रकर्ज्य, | प्रकर्ज्य, | सञ्चिकर्जिष्य, | सञ्चाकर्ज्य ; |
| कर्जम् २, कर्जित्वा २, | कर्जम् २, कर्जयित्वा २, | चिकर्जिषम् २, चिकर्जिषित्वा २, | चाकर्जम् २; चाकर्जित्वा २. |

1. ‘रात् सस्य’ (8-2-24) इति नियमान्न संयोगान्तलोपः ।
2. ‘चलनशब्दार्थादकर्मकाद्युच्’ (3-2-148) इति ताच्छीलिको युच् ।
3. ‘शेषे विभाषाऽकखादौ—’ (8-4-18) इति पर्युदासात् णत्वं न ।
4. निष्ठायां सेट्त्वात् ‘चजोः कु—’ (7-3-52) इति कुत्वं न ।

A. ‘अकर्जितोऽसौ हरिखर्जनोत्कधीः अजत्पशुव्रातमजेन तेजितम् ।
लसत्खजाकं व्रजमासदत् क्रमात् अखञ्जितैरेजितचामरैर्हयैः ॥’ धा. का. 1-31.



## (170) “कर्ण भेदने” (X-चुरादिः-1924. सक. सेट्. उभ.) अदन्तः ।

‘छिद्र कर्णभेदने’ (X-1924) इत्यत्र ‘कर्ण’ इति पृथग्धात्वन्तरं इति पक्षे रूपाणि विलिख्यन्ते ।

| | |
|---|---|
| कर्णकः-र्णिका, | चिकर्णयिषकः-षिका ; [1] |
| कर्णयिता-त्री, | चिकर्णयिषिता-त्री ; |
| कर्णयन्-न्ती, | चिकर्णयिषन्-न्ती ; |
| कर्णयिष्यन्-न्ती-ती, | चिकर्णयिषिष्यन्-न्ती-ती ; |
| कर्णयमानः, | चिकर्णयिषमाणः ; |
| कर्णयिष्यमाणः, | चिकर्णयिषिष्यमाणः ; |
| कर्ण्-कर्णौ-कर्णः ; | — |
| कर्णितम्-तः, | चिकर्णयिषितः-तवान् ; |
| कर्णः, | चिकर्णयिषुः ; |
| कर्णयितव्यम्, | चिकर्णयिषितव्यम् ; |
| कर्णनीयम्, | चिकर्णयिषणीयम् ; |
| कर्ण्यम्, | चिकर्णयिष्यम् ; |
| ईषत्कर्णः-दुष्कर्णः-सुकर्णः ; | — |
| कर्ण्यमानः, | चिकर्णयिष्यमाणः ; |
| कर्णः, | चिकर्णयिषः ; |
| कर्णयितुम्, | चिकर्णयिषितुम् ; |
| कर्णना, | चिकर्णयिषा ; |
| कर्णनम्, | चिकर्णयिषणम् ; |
| कर्णयित्वा, | चिकर्णयिषित्वा ; |
| प्रकर्ण्य, | प्रचिकर्णयिष्य ; |
| कर्णम् २, कर्णयित्वा २, | चिकर्णयिषम् २ ; चिकर्णयिषित्वा २. |

## (171) “कर्त शैथिल्ये” (X-चुरादिः-1915. सक. सेट्. उभ.) अदन्तः ।

‘कर्ण भेदने’ (170) इति धातुवद्रूपाणि सर्वाणि ज्ञेयानि ।

1. अदन्तत्वेनानेकाच्त्वात् यङ् न ।

## (172) "कर्द कुत्सिते शब्दे" (I-भ्वादिः-59. अक. सेट्. पर.)

कुत्सितशब्दः=कौक्षरवः।

'कर्ज व्यथने' (169) इति भौवादिकधातुवत् सर्वाणि रूपाणि ज्ञेयानि।

## (173) "कर्ब गतौ" (I-भ्वादिः-420. सक. सेट्. पर.)

कर्बकः-र्बिका, कर्बकः-र्बिका, चिकर्बिषकः-षिका, चाकर्बकः-र्बिका ;
कर्बिता-त्री, कर्बयिता-त्री, चिकर्बिषिता-त्री, चाकर्बिता-त्री ;
कर्बन्-न्ती, कर्बयन्-न्ती, चिकर्बिषन्-न्ती ; —
— कर्बयमाणः, कर्बयिष्यमाणः, चाकर्ब्यमाणः, चाकर्बिष्यमाणः;
[1]कर्प्-कर्ब्-कर्बौ-कर्बः ; — — —
कर्बितम्-तः, कर्बितः-तम्, चिकर्बिषितः, चाकर्बितः-तवान् ;
कर्बः, कर्बः, चिकर्बिषुः, चिकर्बयिषुः, चाकर्बः ;
कर्बितव्यम्, कर्बयितव्यम्, चिकर्बिषितव्यम्, चाकर्बितव्यम् ;
[2]कर्बणीयम्, कर्बणीयम्, चिकर्बिषणीयम्, चाकर्बणीयम् ;
कर्ब्यम्, कर्ब्यम्, चिकर्बिष्यम्, चाकर्ब्यम् ;
ईषत्कर्बः-दुष्कर्बः-सुकर्बः ; — —
कर्ब्यमाणः, कर्ब्यमाणः, चिकर्बिष्यमाणः, चाकर्ब्यमाणः ;
कर्बः, कर्बः, चिकर्बिषः, चाकर्बः ;
कर्बितुम्, कर्बयितुम्, चिकर्बिषितुम्, चाकर्बितुम् ;
कर्बा, कर्बणा, चिकर्बिषा, चाकर्बा ;
कर्बणम्, कर्बणम्, चिकर्बिषणम्, चाकर्बणम् ;
कर्बित्वा, कर्बयित्वा, चिकर्बिषित्वा, चाकर्बित्वा ;
[A]प्रकर्ब्य, प्रकर्ब्य, संचिकर्बिष्य, प्रचाकर्ब्य ;
कर्बम् २, कर्बित्वा २, } कर्बम् २, कर्बयित्वा २, } चिकर्बिषम् २, चिकर्बिषित्वा २, } चाकर्बम् २ ; चाकर्बित्वा २. }

1. 'वाऽवसाने' (8-4-56) इति चर्त्वविकल्पः।
2. 'अट्कुप्वाङ्नुम्—'(8-4-2) इति णत्वम्।

A. 'हयैस्सुरम्फैः द्रुतमर्बतो रवेः पर्बद्भिरालर्ब्यत रक्तिमा करैः। प्रबर्ब्य शैलानुपमर्ब्य पद्मिनीं प्रकर्ब्य चाशाः श्रमशोणितैरिव ॥' धा. का. 1-54.



## (173-A) "कर्व दर्पे" (I-भ्वादिः-581. अक. सेट्. पर.)

कर्वकः-र्विका, कर्वकः-र्विका, चिकर्विषकः-षिका, चाकर्वकः-र्विका ;
कर्विता-त्री, कर्वयिता-त्री, चिकर्विषिता-त्री, चाकर्विता-त्री ;
[A]कर्वन्-न्ती, कर्वयन्-न्ती, चिकर्विषन्-न्ती ; —
कर्विष्यन्-न्ती-ती, कर्वयिष्यन्-न्ती-ती, चिकर्विषिष्यन्-न्ती-ती ; —
[1]व्यतिकर्वमाणः, कर्वयमाणः, — चाकर्व्यमाणः ;
व्यतिकर्विष्यमाणः, कर्वयिष्यमाणः, — चाकर्विष्यमाणः ;
[2]प्रकः-प्रकरौ-प्रकरः ; — — —
कर्वितम्-तः, कर्वितः-तम्, चिकर्विषितः, चाकर्वितः-तवान् ;
कर्वः, कर्वः, चिकर्विषुः, चिकर्वयिषुः, चाकर्वः ;
कर्वितव्यम्, कर्वयितव्यम्, चिकर्विषितव्यम्, चाकर्वितव्यम् ;
कर्वणीयम्, कर्वणीयम्, चिकर्विषणीयम्, चाकर्वणीयम् ;
कर्व्यम्, कर्व्यम्, चिकर्विष्यम्, चाकर्व्यम् ;
ईषत्कर्वः-दुष्कर्वः-सुकर्वः ; — —
कर्व्यमाणः, कर्व्यमाणः, चिकर्विष्यमाणः, चाकर्व्यमाणः ;
कर्वः, कर्वः, चिकर्विषः, चाकर्वः ;
कर्वितुम्, कर्वयितुम्, चिकर्विषितुम्, चाकर्वितुम्;
[3]कर्वा, कर्वणा, चिकर्विषा, चिकर्वयिषा, चाकर्वा ;
कर्वणम्, कर्वणम्, चिकर्विषणम्, चाकर्वणम् ;
कर्वित्वा, कर्वयित्वा, चिकर्विषित्वा, चाकर्वित्वा ;
सङ्कर्व्य, संकर्व्य, सञ्चिकर्विष्य, सञ्चाकर्व्य ;
कर्वम् २, कर्वित्वा २, } कर्वम् २, कर्वयित्वा २, } चिकर्विषम् २, चिकर्विषित्वा २, } चाकर्वम् २ ; चाकर्वित्वा २. }

1. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
2. 'राल्लोपः' (6-4-21) इति वकारस्य लोपः। रुत्वविसर्गौ। रेफान्तोऽयं शब्दः।
3. 'गुरोश्च हलः' (3-3-103) इति अः प्रत्ययः।

A. 'अफर्विताकाङ्क्षितमर्वकं सतां मांसादिसञ्चर्वकदुष्टभर्वकम्। कर्वद्वधूकेलिरसेन खर्वितं गर्वाविकं शर्वपरेण सर्वताम् ॥' धा. का. 1-74.

(174) **"कल शब्दसंख्यानयोः"** (I-भ्वादिः-497. सक. सेट्. आत्म.)

'कलेः कालयति क्षेपे, गतिसंख्यानयोर्द्वयोः ।
कलयेत्, शब्दसंख्यानविषये कलते शपि ॥' (श्लो-155) इति **देवः** ।

कालकः-लिका, कालकः-लिका, चिकलिषकः-षिका, चाकलकः-लिका ;
कलिता-त्री, कालयिता-त्री, चिकलिषिता-त्री, चाकलिता-त्री ;
— कालयन्-न्ती, कालयिष्यन्-न्ती-ती ; —
कलमानः, कालयमानः, चिकलिषमाणः, चाकल्यमानः ;
कलिष्यमाणः, कालयिष्यमाणः, चिकलिषिष्यमाणः, चाकलिष्यमाणः ;
कल्-कलौ-कलः ; — — —
कलितम्-तः, कालितः-तम्, चिकलिषितः, चाकलितः-तवान् ;
[A]कलः, विकलः, सकलः, [1]कलनः, कालः, चिकलिषुः, चिकालयिषुः, चाकलः ;
कलितव्यम्, कालयितव्यम्, चिकलिषितव्यम्, चाकलितव्यम् ;
[2]प्रनिकलनीयम्, प्रनिकालनीयम्, चिकलिषणीयम्, चाकलनीयम् ;
काल्यम्, काल्यम्, चिकलिष्यम्, चाकल्यम् ;
ईषत्कलः-दुष्कलः-सुकलः ; — —
कल्यमानः, काल्यमानः, चिकलिष्यमाणः, चाकल्यमानः ;
[3]कालः-काली, कालः, चिकलिषः, चाकलः ;
कलितुम्, कालयितुम्, चिकलिषितुम्, चाकलितुम् ;
कलिः, [4]कला, कालना, चिकलिषा, चिकालयिषा, चाकला ;
कलनम्, कालनम्, चिकलिषणम्, चाकलनम् ;
कलित्वा, कालयित्वा, चिकलिषित्वा, चाकलित्वा ;

---

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः ।
2. 'शेषे विभाषा—' (8-4-18) इति णत्वनिषेधः ।
3. 'अकर्तरि च कारके संज्ञायाम्' (3-3-19) इति घञ् । स्त्रियां 'जानपद—' (4-1-42) इत्यादिना ङीष् वर्णे विवक्षिते, **काली** । अन्यत्र **काला** ।
4. बाहुलकात् अङ् ।

A. 'मामल्यमानं स्मितमल्लिकावलीमाभाल्यदैत्याधिपभल्लनोद्धुरम् ।
**कलो**रुकल्लोलकलिन्दजाजले बालैस्तयूगिस्सह देवनोत्सुकम् ॥' धा-का. 1-64.



संकल्य, प्रकाल्य, प्रचिकलिष्य, प्रचाकल्य ;
कालम् २, कलित्वा २, } कालम् २, कालयित्वा २, } चिकलिषम् २, चिकलिषित्वा २, } चाकलम् २ ; चाकलित्वा २. }

(175) **"कल क्षेपे"** (X-चुरादिः-1604. सक. सेट्. उभ.)

'कलेः कालयति क्षेपे, गतिसंख्यानयोर्द्वयोः ।
कलयेत्, शब्दसंख्यानविषये कलने शपि ॥' (श्लो-155) इति **देवः** ।

कालकः-लिका, [1]चिकालयिषकः-षिका ;
कालयिता-त्री, चिकालयिषिता-त्री ;
कालयन्-न्ती, चिकालयिषन्-न्ती ;
कालयिष्यन्-न्ती-ती, चिकालयिषिष्यन्-न्ती-ती ;
कालयमानः, चिकालयिषमाणः ;
कालयिष्यमाणः, चिकालयिषिष्यमाणः ;
काल्-कालौ-कालः ; —
कालितम्-तः, चिकालयिषितः-तवान् ;
कालः, चिकालयिषुः ;
कालयितव्यम्, चिकालयिषितव्यम् ;
कालनीयम्, चिकालयिषणीयम् ;
[A]काल्यम्, चिकालयिष्यम् ;
ईषत्कालः-दुष्कालः-सुकालः ; —
काल्यमानः, चिकालयिष्यमाणः ;
कालः, चिकालयिषः ;
कालयितुम्, चिकालयिषितुम् ;
कालना, चिकालयिषा ;
कालनम्, चिकालयिषणम् ;
कालयित्वा, चिकालयिषित्वा ;

---

1. अनेकाच्त्वात् यङ् न ।

A. '**कालय**न्नवेलनकरोऽयमवेलयद् द्रागन्यांश्च तेलितकृपः खलु कंसचाल्यान् । सम्पालयेद् विमतलूल्यपशुल्बभूमा क्ष्मामेष राम इव शूर्पनखाविचोटी ॥' धा. का. 3-22.

| | |
|---|---|
| प्रकाल्य, | प्रचिकालयिष्य ; |
| कालम् २, कालयित्वा २, | चिकालयिषम् २ ; चिकालयिषित्वा २. |

## (176) " कल गतौ संख्याने च "

(X-चुरादिः-1866. सक. सेट्. उभ. अदन्तः ।

' कलेः कालयति क्षेपे, गतिसंख्यानयोर्द्वयोः ।
कलयेत्, शब्दसंख्यानविषये कलते शपि ॥' (श्लो. 155) इति देवः ।

| | |
|---|---|
| [1]कलकः-लिका, | [1]चिकलयिषकः-षिका ; |
| कलयिता-त्री, | चिकलयिषिता-त्री ; |
| कलयन्-न्ती, | चिकलयिषन्-न्ती ; |
| कलयिष्यन्-न्ती-ती, | चिकलयिषिष्यन्-न्ती-ती ; |
| कलयमानः, | चिकलयिषमाणः ; |
| कलयिष्यमाणः, | चिकलयिषिष्यमाणः ; |
| कल्-कलौ-कलः ; | — |
| कलितम्-तः, | चिकलयिषितः-तवान् ; |
| कलः, | चिकलयिषुः ; |
| कलयितव्यम्, | चिकलयिषितव्यम् ; |
| कलनीयम्, | चिकलयिषणीयम् ; |
| ईषत्कलः-दुष्कलः-सुकलः ; | — |
| कल्यम्, | चिकलयिष्यम् ; |
| कल्यमानः, | चिकलयिष्यमाणः ; |
| कलः, | चिकलयिषः ; |
| कलयितुम्, | चिकलयिषितुम् ; |
| कलना, | चिकलयिषा ; |
| सङ्कलनम्, | चिकलयिषणम् ; |

1. अत्र सर्वत्र अल्लोपस्य स्थानिवत्त्वात् उपधावृद्धिर्न ।



| | |
|---|---|
| कलयित्वा, | चिकलयिषित्वा ; |
| [1]सङ्कलय्य, | प्रचिकलयिष्य ; |
| कलम् २, कलयित्वा २, | चिकलयिषम् २ ; चिकलयिषित्वा २. |

## (177) " कल्ल अव्यक्ते शब्दे " (I-भ्वादिः-498. अक. सेट्.आत्म.)

'कत्थ श्लाघायाम्' (160) इति भौवादिकधातुवत् सर्वाणि रूपाणि ज्ञेयानि । 'कल्ल अशब्दे' इति धातुममुं **क्षीरस्वाम्यादयः** पठन्ति । '**अशब्दः**=तूष्णीम्भावः' इति च विवृण्वन्ति ।

## (178) "कश गतिशासनयोः" (II-अदादिः-1024. अक. सेट्. आत्म.)

**'कसि' 'कस' इत्यनयोः पाठान्तरम् ।**

| | | | |
|---|---|---|---|
| काशकः-शिका, | काशकः-शिका, | चिकशिषकः-षिका, | [2]चाकशकः-शिका ; |
| कशिता-त्री, | काशयिता-त्री, | चिकशिषिता-त्री, | चाकशिता-त्री ; |
| — | काशयन्-न्ती, | काशयिष्यन्-न्ती-ती ; | — |
| [3]कशानः, | काशयमानः, | चिकशिषमाणः, | चाकश्यमानः ; |
| कशिष्यमाणः, | काशयिष्यमाणः, | चिकशिषिष्यमाणः, | चाकशिष्यमाणः ; |
| [4]कट्-कड्-कशौ-कशः ; | | — | — |
| कशितम्-तः, | काशितः-तम्, | चिकशिषितः, | चाकशितः-तवान् ; |
| कशः, [5]कशा, प्रतिष्कशः,[6] | काशः, | चिकशिषुः, चिकाशयिषुः, | चाकशः ; |
| कशितव्यम्, | काशयितव्यम्, | चिकशिषितव्यम्, | चाकशितव्यम् ; |
| [A]कशनीयम्, | प्रनिकाशनीयम्, | चिकशिषणीयम्, | चाकशनीयम् ; |
| काश्यम्, | काश्यम्, | चिकशिष्यम्, | चाकश्यम् ; |

1. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
2. 'दीर्घोऽकितः' (7-4-83) इति अभ्यासे दीर्घः ।
3. 'अदिप्रभृतिभ्यः शपः' (2-4-72) इति शपो लुक् ।
4. 'व्रश्चभ्रस्ज—' (8-2-36) इति षत्वम् । जश्त्वम् ।
5. पचाद्यचि टाप् ।
6. '**प्रतिष्कशश्च कशेः**' (6-1-152) इति पचाद्यचि सुट् । षत्वं च । वार्तापुरुषः सहायः पुरोयायी वा **प्रतिष्कश** इत्युच्यते । 'ग्राममद्य प्रवेक्ष्यामि भव मे त्वं **प्रतिष्कशः** ।' इति **काशिका** ।

A. 'स्वीयैश्चकंसे **कशनीय**कासी रमोष्ठनिंसी नतचितनिञ्जी ॥' धा. का. 2-45.

ईषत्कशः- दुष्कशः- सुकशः ; — —

कश्यमानः, काश्यमानः, चिकशिष्यमाणः, चाकश्यमानः ;

काशः, काशः, चिकशिषः, चाकशः ;

कशितुम्, काशयितुम्, चिकशिषितुम्, चाकशितुम् ;

कष्टिः, काशना, चिकशिषा, चिकाशयिषा, चाकशा ;

कशनम्, काशनम्, चिकशिषणम्, चाकशनम् ;

कशित्वा, काशयित्वा, चिकशिषित्वा, चाकशित्वा ;

प्रकश्य, प्रकाश्य, प्रचिकशिष्य, प्रचाकश्य ;

काशम् २, कशित्वा २, | काशम् २, काशयित्वा २, | चिकशिषम् २, चिकशिषित्वा २, | चाकशम् २; चाकशित्वा २.

(179) "कष हिंसायाम्" (I-भ्वादिः-686. सक. सेट्. पर.)

काषकः-षिका, काषकः-षिका, चिकषिषकः-षिका, चाकषकः-षिका ;

कषिता-त्री, काषयिता-त्री, चिकषिषिता-त्री, चाकषिता-त्री ;

कषन्-न्ती, काषयन्-न्ती, चिकषिषन्-न्ती ; —

कषिष्यन्-न्ती-ती, काषयिष्यन्-न्ती-ती, चिकषिषिष्यन्-न्ती-ती ;

काषयमाणः, काषयिष्यमाणः, चाकष्यमाणः, चाकषिष्यमाणः;

कट्-कड्-कषौ-कषः ; — — —

[1]कष्टम्[A]-ष्टः-ष्टवान्<br>कषितम्-तः-तवान् | काषितः-तम्, चिकषिषितः, चाकषितः-तवान् ;

कषः, [B]सत्कषः, [2]सर्वङ्कषः, कूलङ्कषः, कूलङ्कषा [नदी,] [C]अभ्रङ्कषो [वायुः,] करीषङ्कषा [वात्या], [3]पत्काषी, [4]विकाषी, काषः, चिकषिषुः, चिकाषयिषुः, चाकषः;

---

1. 'कृच्छ्रगहनयोः कषः' (7-2-22) इति असह्ये दुष्प्रापे च अर्थविशेषे निष्ठायामनिट्। अन्यत्र '**कषित**' इति।
2. 'सर्वकूलाभ्रकरीषेषु **कषः**' (3-2-42) इति खच्। 'अरुर्द्विषदजन्तस्य–' (6-3-67) इति मुम्।
3. 'सुप्यजातौ–' (3-2-78) इति णिनिः। '**हिमकाषि**–' (6-3-54) इति पद्भावः।
4. '**वौ कषलस**–' (3-2-143) इति घिनुण् ताच्छीलिकः।

A. '**कष्टं** विनर्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः ॥' भ.का. 9-18.

B. 'सुकर्मणः क्ष्माविबुधान् हविर्दुघाः तथाऽर्जुनीः गाः स्म निहन्ति **सत्कषम्**।' वा. वि. 3. 46.

C. '**सर्वङ्कष**यशश्शाखं रामकल्पतरुं कपिः।<br>आदाया**भ्रङ्कषं** प्रायाम्मलयं फलशालिनम् ॥' भ. का. 6-103.



कषितव्यम्, काषयितव्यम्, चिकषिषितव्यम्, चाकषितव्यम् ;

कषणीयम्, काषणीयम्, चिकषिषणीयम्, चाकषणीयम् ;

काष्यम्, काष्यम्, चिकषिष्यम्, चाकष्यम् ;

ईषत्कषः-दुष्कषः-सुकषः ; — —

कष्यमाणः, काष्यमाणः, चिकषिष्यमाणः, चाकष्यमाणः ;

काषः, [1]निकषः, आकषः, काषः, चिकषिषः, चाकषः ;

कषितुम्, काषयितुम्, चिकषिषितुम्, चाकषितुम् ;

कष्टिः, काषणा, चिकषिषा, चिकाषयिषा, चाकषा ;

कषणम्, काषणम्, चिकषिषणम्, चाकषणम् ;

कषित्वा, काषयित्वा, चिकषिषित्वा, चाकषित्वा ;

प्रकष्य, प्रकाष्य, प्रचिकषिष्य, प्रचाकष्य ;

काषम् २, कषित्वा २,<br>[2]निमूलकाषं [कषति]<br>[A]समूलकाषं [कषति] | काषम् २,<br>काषयित्वा २, | चिकषिषम् २,<br>चिकषिषित्वा २, | चाकषम् २;<br>चाकषित्वा २.

(180) "**कस गतौ**" (I-भ्वादिः-860.सक.सेट्.पर. ज्वलादिः।)

'गतिशासनयोः कस्ते कसतीति गतौ शपि।' (श्लो. 192) इति **देवः**।

[3]कासकः-सिका, कासकः-सिका, चिकसिषकः-षिका, [4]चनीकसकः-सिका ;

कसिता-त्री, कासयिता-त्री, चिकसिषिता-त्री, चनीकसिता-त्री ;

कसन्-न्ती, कासयन्-न्ती, चिकसिषन्-न्ती ; —

कसिष्यन्-न्ती-ती, कासयिष्यन्-न्ती-ती, चिकसिषिष्यन्-न्ती-ती ;

कासयमानः, कासयिष्यमाणः, चनीकस्यमानः, चनीकसिष्यमाणः ;

[5]कः-कसौ-कसः ; — — —

---

1. 'गोचरसंचर–' (3-3-119) इति सूत्रे अनुक्तसमुच्चयार्थकचकारात् अन्यत्रापि संज्ञायां अधिकरणे घः।
2. 'निमूलसमूलयोः **कषः**' (3-4-34) इति णमुल्। उपपदसमासः। '**कषादिषु** यथाविध्यनुप्रयोगः' (3-4-46) इति णमुलन्तात् परत्र पूर्वप्रयुक्तधातोरेवानुप्रयोगः।
3. 'अत उपधायाः' (7-2-116) इति वृद्धिः।
4. 'नीग्वञ्चुस्रंसुध्वंसुभ्रंसु**कस**पतपदस्कन्दाम्' (7-4-84) इत्यभ्यासस्य नीक्।
5. 'ससजुषो रुः' (8-2-66) इति रुत्वम्। विसर्गः।

A. '**समूलकाषं चकषू** रुदन्तः रामान्तिकं बृंहितमन्युवेगाः।' भ. का. 3-49.

कसितम्-तः, कासितः-तम्, चिकसिषितः, चनीकसितः-तवान् ;
कसः, [1]कासः, [2]कस्वरः, [A]कशनीयकासी, कासः, चिकसिषुः,
चिकासयिषुः, चनीकसः ;
कसितव्यम्, कासयितव्यम्, चिकसिषितव्यम्, चनीकसितव्यम् ;
कसनीयम्, कासनीयम्, चिकसिषणीयम्, चनीकसनीयम् ;
कास्यम्, कास्यम्, चिकसिष्यम्, चनीकस्यम् ;
ईषत्कसः-दुष्कसः-सुकसः, — —
कस्यमानः, कास्यमानः, चिकसिष्यमाणः, चनीकस्यमानः ;
कासः, [B]विकासः, कासः, चिकसिषः, चनीकसः ;
कसितुम्, कासयितुम्, चिकसिषितुम्, चनीकसितुम् ;
कस्तिः, कासना, चिकसिषा, चिकासयिषा, चनीकसा ;
कसनम्, कासनम्, चिकसिषणम्, चनीकसनम् ;
कसित्वा, कासयित्वा, चिकसिषित्वा, चनीकसित्वा ;
विकस्य, विकास्य, विचिकसिष्य, विचनीकस्य ;
कासम् २, कासम् २, चिकसिषम् २, चनीकसम् २ ;
कसित्वा २, कासयित्वा २, चिकसिषित्वा २, चनीकसित्वा २.

## (181) "कस गतिशासनयोः" (II-अदादिः-1024. सक. सेट्. आत्म.)

'कसि' इति उपरि विलेख्यमानस्य पाठान्तरोऽयम्। भौवादिककसधातुवत् (180) सर्वाणि रूपाणि ज्ञेयानि। शानचि परम्—कसानः, कसिष्यमाणः, कासयमानः, कासयिष्यमाणः, चिकसिषमाणः, चिकसिषिष्यमाणः, चनीकस्यमानः, चनीकसिष्यमाणः, इति रूपाणीति विशेषः।

## (182) "कसि गतिशासनयोः" (II-अदादिः-1024. सक. सेट्. आत्म.)

'गतिशासनयोः कंस्ते, कसतीति गतौ शपि।' (श्लो-192) इति **देवः**।
कंसकः-सिका, कंसकः-सिका, चिकंसिषकः-षिका, चाकंसकः-सिका ;

1. 'ज्वलितिकसन्तेभ्यो णः' (3-1-140) इति वा णः। पक्षे पचाद्यच्।
2. 'स्थेशभासपिसकसो वरच्' (3-2-175) इति वरच् ताच्छीलिकः।

A. 'स्वीयैश्वकंसे **कशनीयकासी** रमोष्ठनिंसी नतचित्तनिञ्जी ॥' धा. का. 2-45.

B. 'क्रोशैर्जनाः कोचगलान् मरालान् बोधन्ति यत्राम्बुरुहां **विकासे** ॥' धा. का. 2.24.



कंसिता-त्री, कंसयिता-त्री, चिकंसिषिता-त्री, चाकंसिता-त्री ;
— कंसयन्-न्ती, कंसयिष्यन्-न्ती-ती ; —
[1]कंसानः, कंसयमानः, चिकंसिषमाणः, चाकंस्यमानः ;
कंसिष्यमाणः, कंसयिष्यमाणः, चिकंसिषिष्यमाणः, चाकंसिष्यमाणः ;
[2]कन्-कंसौ-कंसः — — —
कंसितम्-तः, कंसितः-तम्, चिकंसिषितः, चाकंसितः-तवान् ;
[[3]कंसः] कंसः, चिकंसिषुः, चिकंसयिषुः, चाकंसः ;
कंसितव्यम्, कंसयितव्यम्, चिकंसिषितव्यम्, चाकंसितव्यम् ;
कंसनीयम्, कंसनीयम्, चिकंसिषणीयम्, चाकंसनीयम् ;
कंस्यम्, कंस्यम्, चिकंसिष्यम्, चाकंस्यम् ;
ईषत्कंसः-दुष्कंसः-सुकंसः ; — —
कंस्यमानः, कंस्यमानः, चिकंसिष्यमाणः, चाकंस्यमानः ;
[4]कंसः, कंसः, चिकंसिषः, चाकंसः ;
कंसितुम्, कंसयितुम्, चिकंसिषितुम्, चाकंसितुम् ;
कंसा, कंसना, चिकंसिषा, चिकंसयिषा, चाकंसा ;
कंसनम्, कंसनम्, चिकंसिषणम्, चाकंसनम् ;
कंसित्वा, कंसयित्वा, चिकंसिषित्वा, चाकंसित्वा ;
प्रकंस्य, संकंस्य, प्रचिकंसिष्य, प्रचाकंस्य ;
कंसम् २, कंसम् २, चिकंसिषम् २, चाकंसम् २ ;
कंसित्वा २, कंसयित्वा २, चिकंसिषित्वा २, चाकंसित्वा २.

## (183) "काक्षि काङ्क्षायाम्" (I-भ्वादिः-667. सक. सेट्. पर.)

काङ्क्षकः-क्षिका, कांक्षकः-क्षिका, चिकांक्षिषकः-षिका, चाकाङ्क्षकः-क्षिका ;
कांक्षिता-त्री, काङ्क्षयिता-त्री, चिकाङ्क्षिषिता-त्री, चाकाङ्क्षिता-त्री ;

1. 'इदितो नुम् धातोः' (7-1-58.) इति नुम्। 'अदिप्रभृतिभ्यः शपः' (2-4-72) इति शपो लुक्।
2. 'संयोगान्तस्य लोपः' (8-2-23) इति सकारलोपः।
3. 'अतः कृकमिकंस—' (8-3-46) इति सूत्रे '**कमेः** सः **कंसः**, न तु **कंसेः** इति **भाष्यात्**—अस्यानभिधानं कल्प्यते।
4. 'पुंसि संज्ञायां घः प्रायेण' (3-3-118) इति घः। **कंसे**रचूप्रत्ययो न, अनभिधानात् इति 'प्रत्ययस्य लुक्श्लुलुपः' (1-1-61) इत्यत्र **भाष्यात्**।

काङ्क्षन्-न्ती, काङ्क्षयन्-न्ती, चिकाङ्क्षिषन्-न्ती ; —
काङ्क्षिष्यन्-न्ती-ती, काङ्क्षयिष्यन्-न्ती-ती, चिकाङ्क्षिषिष्यन्-न्ती-ती ;
[1]काङ्क्षमाणः, काङ्क्षयमाणः, — चाकाङ्क्ष्यमाणः ;
— काङ्क्षयिष्यमाणः, — चाकाङ्क्षिष्यमाणः ;
[2]कान्-काङ्क्षौ-काङ्क्षः ; — —
काङ्क्षितम्-[A]तः-तवान्, काङ्क्षितः-तम्, चिकाङ्क्षिषितः, चाकाङ्क्षितः-तवान् ;
काङ्क्षः, [3]आकाङ्क्षी, [B]वधकाङ्क्षी, काङ्क्षः, चिकाङ्क्षिषुः, चिकाङ्क्षयिषुः, चाकाङ्क्षः ;
काङ्क्षितव्यम्, काङ्क्षयितव्यम्, चिकाङ्क्षिषितव्यम् ; चाकाङ्क्षितव्यम् ;
काङ्क्षणीयम्, काङ्क्षणीयम्, चिकाङ्क्षिषणीयम्, चाकाङ्क्षणीयम् ;
काङ्क्ष्यम्, काङ्क्ष्यम्, चिकाङ्क्षिष्यम्, चाकाङ्क्ष्यम् ;
ईषत्काङ्क्षः-दुष्काङ्क्षः-सुकाङ्क्षः ; — —
काङ्क्ष्यमाणः, काङ्क्ष्यमाणः, चिकाङ्क्षिष्यमाणः, चाकाङ्क्ष्यमाणः ;
काङ्क्षः, काङ्क्षः, चिकाङ्क्षिषः, चाकाङ्क्षः ;
काङ्क्षितुम्, काङ्क्षयितुम्, चिकाङ्क्षिषितुम्, चाकाङ्क्षितुम् ;
अभिकाङ्क्षा, आकाङ्क्षा, काङ्क्षणा, चिकाङ्क्षिषा, चिकाङ्क्षयिषा, चाकाङ्क्षा ;
काङ्क्षणम्, काङ्क्षणम्, चिकाङ्क्षिषणम्, चाकाङ्क्षणम् ;
काङ्क्षित्वा, काङ्क्षयित्वा, चिकाङ्क्षिषित्वा, चाकाङ्क्षित्वा ;
अभिकाङ्क्ष्य, अभिकाङ्क्ष्य, प्रचिकाङ्क्षिष्य, प्रचाकाङ्क्ष्य ;
काङ्क्षम् २, काङ्क्षित्वा २, } काङ्क्षम् २, काङ्क्षयित्वा २, } चिकाङ्क्षिषम् २, चिकाङ्क्षिषित्वा २, } चाकाङ्क्षम् २; चाकाङ्क्षित्वा २. }

---

1. 'ताच्छील्यवयोवचनशक्तिषु चानश्' (3-2-129) इति ताच्छील्ये चानश्।
2. 'स्कोः संयोगाद्योः–' (8-2-29) इति कलोपः। 'संयोगान्तस्य–' (8-2-23) इति षकारस्य लोपः।
3. 'सुप्यजातौ–' (3-2-78) इति णिनिः।

A. 'सूक्ष्यं त्वदीक्षा चिर**काङ्क्षिता** नः वाङ्क्षाम्यमाङ्क्ष्यान् न तु नीचलोकान्।' धा. का. 1-85.

B. 'कुर्वन्तो ह्ववमाप्तानां पिपासाव**धकाङ्क्षिणः**।
द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतम् ॥' भ. का. 7-61.



## (184) "काचि दीप्तिबन्धनयोः" (I-भ्वादिः-170. सक. सेट्. आत्म.)

काञ्चकः-ञ्चिका, काञ्चकः-ञ्चिका, चिकाञ्चिषकः-षिका, चाकाञ्चकः-ञ्चिका ;
काञ्चिता-त्री, काञ्चयिता-त्री, चिकाञ्चिषिता-त्री, चाकाञ्चिता-त्री ;
— काञ्चयन्-न्ती, काञ्चयिष्यन्-न्ती-ती ; —
काञ्चमानः, काञ्चयमानः, चिकाञ्चिषमाणः, चाकाञ्चयमानः ;
काञ्चिष्यमाणः, काञ्चयिष्यमाणः, चिकाञ्चिषिष्यमाणः, चाकाञ्चिष्यमाणः ;
कान्-काञ्चौ-काञ्चः ; — — —
काञ्चितम्-तः, काञ्चितः-तम्, चिकाञ्चिषितः, चाकाञ्चितः-तवान् ;
काञ्चः, [1]काञ्चनम्[A], काञ्चः, चिकाञ्चिषुः, चिकाञ्चयिषुः, चाकाञ्चः ;
काञ्चितव्यम्, काञ्चयितव्यम्, चिकाञ्चिषितव्यम्, चाकाञ्चितव्यम् ;
काञ्चनीयम्, काञ्चनीयम्, चिकाञ्चिषणीयम्, चाकाञ्चनीयम् ;
काञ्च्यम्, काञ्च्यम्, चिकाञ्चिष्यम्, चाकाञ्च्यम् ;
ईषत्काञ्चः-दुष्काञ्चः-सुकाञ्चः ; — —
काञ्च्यमानः, काञ्च्यमानः, चिकाञ्चिष्यमाणः, चाकाञ्च्यमानः ;
काञ्चः, काञ्चः, चिकाञ्चिषः, चाकाञ्चः ;
काञ्चितुम्, काञ्चयितुम्, चिकाञ्चिषितुम्, चाकाञ्चितुम् ;
काञ्चा, काञ्चना, चिकाञ्चिषा, चिकाञ्चयिषा, चाकाञ्चा ;
काञ्चनम्, काञ्चनम्, चिकाञ्चिषणम्, चाकाञ्चनम् ;
काञ्चित्वा, काञ्चयित्वा, चिकाञ्चिषित्वा, चाकाञ्चित्वा ;
अवकाञ्च्य, संकाञ्च्य, प्रचिकाञ्चिष्य, प्रचाकाञ्च्य ;
काञ्चम् २, काञ्चित्वा २, } काञ्चम् २, काञ्चयित्वा २, } चिकाञ्चिषम् २, चिकाञ्चिषित्वा २, } चाकाञ्चम् २; चाकाञ्चित्वा २; }
[2]काञ्ची-काञ्चिः ॥

---

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः।
2. औणादिक इन् प्रत्ययः। 'कृदिकारादक्तिनः' (ग. सू. 4-1-45) इति वा ङीष्।

A. 'सुलोचना यत्र शचीसमप्रभा अशाश्वचुः श्वञ्चितसौरभाः कचे।
सकञ्चुकाः **काञ्चनकाञ्चि**भूषिता व्रजाङ्गना निर्मचनेन नर्मणा ॥' धा. का. 1-23.

**(185) "काल उपदेशे"** (X-चुरादि:-1881. सक. सेट्.उभ.**अदन्तः**।)[अ]

काल़क:-लिका, चिकालयिषक:-षिका ;
कालयिता-त्री, चिकालयिषिता-त्री ;
कालयन्-न्ती, चिकालयिषन्-न्ती ;
कालयिष्यन्-न्ती-ती, चिकालयिषिष्यन्-न्ती-ती ;
कालयमान:, चिकालयिषमाण: ;
कालयिष्यमाण:, चिकालयिषिष्यमाण: ;
काल्-कालौ-काल: ; —
कालितम्-त:, चिकालयिषित:-तवान् ;
काल:, चिकालयिषु: ;
कालयितव्यम्, चिकालयिषितव्यम् ;
कालनीयम्, चिकालयिषणीयम् ;
काल्यम्, चिकालयिष्यम् ;
ईषत्काल:-दुष्काल:-सुकाल: ; —
काल्यमान:, चिकालयिष्यमाण: ;
काल:, चिकालयिष: ;
कालयितुम्, चिकालयिषितुम् ;
कालना, चिकालयिषा ;
कालनम्, चिकालयिषणम् ;
कालयित्वा, चिकालयिषित्वा ;
संकाल्य, संचिकालयिष्य ;
कालम् २, कालयित्वा २, } चिकालयिषम् २; चिकालयिषित्वा २. }

[अ] 'वेल **कालोपदेशे**' (चुरादि:-1881) इत्यत्र '**काल**' इति पृथग् धातुरिति **आत्रेयादीनां** पक्ष:। तदवलम्ब्य रूपाणि लिख्यन्ते। '**उपयोगे**' इति **मा. धा. वृत्तौ** पाठ:।



**(186) "काशृ दीप्तौ"** (I-भ्वादि:-647. अक. सेट्. आत्म.)

'—काशेर्दीप्तौ काश्येत काशते।' (श्लो. 165) इति **देव:**।

काशक:-शिका, [A]काशिका[1], प्रकाशक:-शिका, चिकाशिषक:-षिका, चाकाशक:-शिका ;
काशिता-त्री, काशयिता-त्री, चिकाशिषिता-त्री, चाकाशिता-त्री ;
— काशयन्-न्ती, काशयिष्यन्-न्ती-ती ; —
काशमान:, काशयमान:, चिकाशिषमाण:, चाकाश्यमान: ;
काशिष्यमाण:, काशयिष्यमाण:, चिकाशिषिष्यमाण:, चाकाशिष्यमाण: ;
[2]काट्-काड्-काशौ-काश: ; — —
काशितम्-त:, काशित:-तम्, चिकाशिषित:, चाकाशित:-तवान् ;
काश:-[3]काशी, प्रकाशी, [4]नीकाश:[B], वीकाश:, अनूकाश:, [5]जितकाशी;
[6]प्रकाशन:, काश:, चिकाशिषु:, चिकाशयिषु:, चाकाश: ;
काशितव्यम्, काशयितव्यम्, चिकाशिषितव्यम्, चाकाशितव्यम् ;
काशनीयम्, [7]प्रनिकाशनीयम्, चिकाशिषणीयम्, चाकाशनीयम् ;
प्रकाश्यम्, काश्यम्, चिकाशिष्यम्, चाकाश्यम् ;
ईषत्काश:-दुष्काश:-सुकाश: ; — —

1. 'संज्ञायाम्' (3-3-109) इति भावे ण्वुल्। ण्वुलन्तात् टाप्। अत इत्वम्। **काशिका** = **वामन-जयादित्य**कृता **पाणिनिसूत्रवृत्ति:**। काश्यां विरचनाद्वा **काशिका**।
2. 'व्रश्चभ्रस्ज—' (8-2-36) इति षत्वम्। जश्त्वचर्त्वे।
3. काशते इति **काशी**। पचाद्यजन्तात् गौरादि (4-1-41) पाठात् ङीष्।
4. 'इक: **काशे**' (6-3-123) इति उपसर्गस्य दीर्घ:।
5. 'सुप्यजातौ णिनिस्ताच्छील्ये' (3-2-78) इति णिनि:। जितेन = जयेन काशते इति **जितकाशी** = जययुक्त:।
6. 'अनुदात्तेतश्च हलादे:' (3-2-149) इति ताच्छीलिको युच्।
7. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति णत्वं न ; 'अकखादा' वित्युक्ते:।

A. 'मनोनिवृत्ति: परमोपशान्ति: सा तीर्थवर्या मणिकर्णिका वै। ज्ञानप्रवाहा विमला हि गङ्गा सा **काशिका**ऽहं निजबोधरूप: ॥' इति पारिभाषिक**काशिकाया:** लक्षणमुक्तं **शङ्कराचार्येण**।' इति **शब्दकल्पद्रुमे**।
B. 'तापिञ्छ**नीकाश**रुचि प्रतीचि स्ववैरिमर्मविधि पुंसि रागात्।' वा. वि. 3-21.

काश्यमानः, काश्यमानः, चिकाशिष्यमाणः, चाकाश्यमानः ;
प्रकाशः, काशः, चिकाशिषः, चाकाशः ;
काशितुम्, काशयितुम्, चिकाशिषितुम्, चाकाशितुम् ;
काशा, काशना, चिकाशिषा, चिकाशयिषा, चाकाशा ;
[A]प्रकाशनम्, काशनम्, चिकाशिषणम्, चाकाशनम् ;
काशित्वा, काशयित्वा, चिकाशिषित्वा, चाकाशित्वा ;
प्रकाश्य, संकाश्य, प्रचिकाशिष्य, प्रचाकाश्य ;
काशम् २, काशित्वा २, } काशम् २, काशयित्वा २, } चिकाशिषम् २, चिकाशिषित्वा २, } चाकाशम् २; चाकाशित्वा २. }

(187) **" काशृ दीप्तौ "** (IV- दिवादिः-1162. सक.सेट्. आत्म.)

'—काशेः दीप्तौ काश्येत काशते।' (श्लो. 165) इति **देवः ।**

काश्यमानः, काशिष्यमाणः, काशयमानः, काशयिष्यमाणः, चिकाशिषमाणः, चिकाशिषिष्यमाणः, चाकाश्यमानः, चाकाशिष्यमाणः, इति शानचि रूपाणि । अन्यानि सर्वाणि रूपाणि भौवादिककाशृधातुवत् (186) ज्ञेयानि ।

(188) **" कासृ शब्दकुत्सायाम् "** (I-भ्वादिः-62. सक. सेट्. आत्म.)

'शब्दस्य कुत्सा रोगित्वात् ।' इति **क्षीरतरङ्गिणी ।**

कासकः-सिका, कासकः-सिका, चिकासिषकः-षिका, चाकासकः-सिका ;
कासिता-त्री, कासयिता-त्री, चिकासिषिता-त्री, चाकासिता-त्री ;
— कासयन्-न्ती, कासयिष्यन्-न्ती-न्ती ; —
कासमानः, कासयमानः, चिकासिषमाणः, चाकास्यमानः ;
कासिष्यमाणः, कासयिष्यमाणः, चिकासिषिष्यमाणः, चाकासिष्यमाणः ;
[1]प्रकाः-प्रकासौ-प्रकासः ; — —
कासितम्-तः, कासितः-तम्, चिकासिषितः, चाकासितः-तवान् ;
कासः, कासः, चिकासिषुः, चिकासयिषुः, चाकासः ;
कासितव्यम्, कासयितव्यम्, चिकासिषितव्यम्, चाकासितव्यम् ;

1. 'ससजुषो रुः' (8-2-66) इति रुत्वे 'खरवसानयोर्विसर्जनीयः' (8-3-15) इति विसर्गः ।

A. 'द्राहितः शुभपथप्रकाशने सख्वजेऽथ तमनूह्यवैभवः ।' धा. का. 1-82.



कासनीयम्, कासनीयम्, चिकासिषणीयम्, चाकासनीयम् ;
कास्यम्, कास्यम्, चिकासिष्यम्, चाकास्यम् ;
ईषत्कासः-दुष्कासः-सुकासः ; — —
कास्यमानः, कास्यमानः, चिकासिष्यमाणः, चाकास्यमानः ;
[1]कासः, कासः, चिकासिषः, चाकासः ;
कासितुम्, कासयितुम्, चिकासिषितुम्, चाकासितुम् ;
कासा, कासना, चिकासिषा, चिकासयिषा, चाकासा ;
निष्कासनम्, कासनम्, चिकासिषणम्, चाकासनम् ;
कासित्वा, कासयित्वा, चिकासिषित्वा, चाकासित्वा ;
विकास्य, विकास्य, विचिकासिष्य, प्रचाकास्य ;
कासम् २, कासित्वा २, } कासम् २, कासयित्वा २, } चिकासिषम् २, चिकासिषित्वा २, } चाकासम् २; चाकासित्वा २. }

(189) **" कि ज्ञाने "** (III-जुहोत्यादिः-1101. सक. अनि. पर.)

**छान्दसः ।**

कायकः-यिका, कायकः-यिका, [2]चिकीषकः-षिका, [3]चेकीयकः-यिका ;
केता-त्री, काययिता-त्री, चिकीषिता-त्री, चेकीयिता-त्री ;
[4]चिक्यत्-ती, काययन्-न्ती, चिकीषन्-न्ती ; —
केष्यन्-न्ती-ती, काययिष्यन्-न्ती-ती, चिकीषिष्यन्-न्ती-ती ; —
काययमानः, काययिष्यमाणः, चेकीयमानः, चेकीयिष्यमाणः ;
[5]कित्-कितौ-कितः ; — — —
कितम्-तः, कायितः-तम्, चिकीषितः, चेकीयितः-तवान् ;
कयः, कायः, चिकीषुः, चिकाययिषुः, [6]चेक्यः ;

1. 'हलश्च' (3-3-121) इति संज्ञायां घञ् । **कासः**=कासरोगः ।
2. 'इको झल्' (1-2-9) इति सनः कित्वम् । 'अज्झनगमां सनि' (6-4-16) इति दीर्घः ।
3. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।
4. जुहोत्यादित्वात् 'श्लौ' (6-1-10) इति द्वित्वम् । 'नाभ्यस्ताच्छतुः' (7-1-78) इति नुम्निषेधः । 'एरनेकाचः—' (6-4-82) इति यण् ।
5. 'ह्रस्वस्य पिति कृति तुक्' (6-1-71) इति तुक् ।
6. यङ्लुगन्तात् पचाद्यच् । 'एरनेकाचः—' (6-4-82) इति यण् ।

केतव्यम्, कायवितव्यम्, चिकीषितव्यम्, चेकीयितव्यम्;
कयनीयम्, कायनीयम्, चिकीषणीयम्, चेकीयनीयम्;
केयम्, काय्यम्, चिकीष्यम्, चेकीय्यम्;
ईषत्कयः-दुष्कयः-सुकयः; — —
कीयमानः, काय्यमानः, चिकीष्यमाणः, चेकीय्यमानः;
[1]कयः, कायः, चिकीषः, चेकीयः;
केतुम्, काययितुम्, चिकीषितुम्, चेकीयितुम्;
कितिः, कायना, चिकीषा, चिकाययिषा, चेकीया;
कयनम्, कायनम्, चिकीषणम्, चेकीयनम्;
कित्वा, काययित्वा, चिकीषित्वा, चेकीयित्वा;
प्रकित्य, विकाय्य, प्रचिकीष्य, प्रचेकीय्य;
कायम् २, कित्वा २, } कायम् २, काययित्वा २, } चिकीषम् २, चिकीषित्वा २, } चेकीयम् २; चेकीयित्वा २. }

## (190) "किट त्रासे" (I-भ्वादिः-301. सक. सेट्. पर.)

त्रासः=भयोत्पादनम्।

केटकः-टिका, केटकः-टिका, [2]चिकिटिषकः-चिकेटिषकः-षिका, चेकिटकः-टिका;
केटिता-त्री, केटयिता-त्री, चिकिटिषिता-चिकेटिषिता-त्री, चेकिटिता-त्री;
केटन्-न्ती, केटयन्-न्ती, चिकिटिषन्-चिकेटिषन्-न्ती; —
केटिष्यन्-न्ती-ती, केटयिष्यन्-न्ती-ती, चिकिटिषिष्यन्-चिकेटिषिष्यन्-न्ती-ती;
— केटयमानः, केटयिष्यमाणः, चेकिट्यमानः, चेकिटिष्यमाणः;
किट्-किटौ-किटः; — — —
किटितम्-[A]तः, केटितः-तम्, चिकिटिषितः-चिकेटिषितः, चेकिटितः-तवान्;
[3]किटः, केटः, चिकिटिषुः-चिकेटिषुः, चिकेटयिषुः, चेकिटः;

1. 'एरच्' (3-3-56) इति भावे अच्।
2. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति सनः कित्त्वविकल्पात् रूपद्वयम्।
3. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः।
A. 'लाटाङ्घशाटीवटितैः वटुव्रजैर्वृतान् खलेश्चा**किटितान्** प्रखेटकैः।
अशेटनीयैः सुधियामसेटकैः युतान् जटाझाटधरैश्च कैश्चन॥' धा. का 1. 40.



केटितव्यम्, केटयितव्यम्, चिकिटिषितव्यम्-चिकेटिषितव्यम्, चेकिटितव्यम्;
केटनीयम्, केटनीयम्, चिकिटिषणीयम्-चिकेटिषणीयम्, चेकिटनीयम्;
केट्यम्, केट्यम्, चिकिटिष्यम्-चिकेटिष्यम्, चेकिट्यम्; —
ईषत्केटः-दुष्केटः-सुकेटः; — — —
किट्यमानः, केट्यमानः, चिकिटिष्यमाणः-चिकेटिष्यमाणः, चेकिट्यमानः;
केटः, केटः, चिकिटिषः-चिकेटिषः, चेकिटः;
केटितुम्, केटयितुम्, चिकिटिषितुम्-चिकेटिषितुम्, चेकिटितुम्;
[1]किट्टिः, केटना, चिकिटिषा-चिकेटिषा, चिकेटयिषा, चेकिटा;
केटनम्, केटनम्, चिकिटिषणम्-चिकेटिषणम्, चेकिटनम्;
[2]किटित्वा, केटित्वा, } केटयित्वा, चिकिटिषित्वा-चिकेटिषित्वा, चेकिटित्वा;
प्रकिट्य, प्रकेट्य, प्रचिकिटिष्य-प्रचिकेटिष्य, प्रचेकिट्य;
केटम् २, किटित्वा २, केटित्वा २, } केटम् २, केटयित्वा २, } चिकिटिषम् २, चिकिटिषित्वा २, चिकेटिषम् २, चिकेटिषित्वा २, }
चेकिटम् २; चेकिटित्वा २. }

## (191) "किट गतौ" (I-भ्वादिः-319. सक. सेट्. पर.)

सर्वाण्यपि रूपाणि पूर्वोक्त 'किट' (190) धातुवत् ज्ञेयानि।

## (192) "कित निवासे रोगापनयने च"

(I-भ्वादिः-993. सक. सेट्. पर.) [अ]

[3]चिकित्सकः-त्सिका, चिकित्सकः-त्सिका, [4]चिकित्सिषकः-षिका, [5]केतकः-तिका;

1. 'ष्टुना ष्टुः' (8-4-41) इति ष्टुत्वेन टकारः।
2. 'रलो व्युपधात्—' (1-2-26) इति क्त्वायां कित्त्वविकल्पात् द्वे रूपे।
3. 'गुप्तिज्किद्भ्यस्सन्' (3-1-5) इति स्वार्थे सन् '**कितेर्**व्याधिप्रतीकारे निग्रहे अपनये नाशने संशये च' (वा. 3-1-5) इत्येतेष्वर्थेषु भवति। अन्यस्मिन्नर्थे तु चुरादिर्वेदितव्यः।
4. स्वार्थसन्नन्तादिच्छासनि इदं रूपम्। 'सन्नन्तान्न सनिष्यते—' (भाष्येष्टिः—3-1-7) इति तु इच्छासन्नन्तादिच्छासन् न। स्वार्थसन्नन्तात् स्यादेवेत्यर्थकम्।
5. ण्यन्तात् इमानि रूपाणि।
अ. निवासरूपार्थे '**केतन्**' (**केतति**) इति रूपमिति **क्षीरस्वामी**। 'अर्थान्तरेऽननुबन्धकाश्चुरादयः' इति **सिद्धान्तकौमुद्या**मुक्तम्। तत्तु **काशिकावृत्त्या**द्यनुसारेणेति बोध्यम्।

चिकित्सिता-त्री, [1]चिकित्सयिता-त्री, चिकित्सिषिता-त्री,
केतयिता-त्री ;

[A]चिकित्सन्-न्ती, चिकित्सयन्-न्ती, चिकित्सिषन्-न्ती,
केतयन्-न्ती ;

चिकित्सिष्यन्-न्ती-ती, चिकित्सयिष्यन्-न्ती-ती, चिकित्सिषिष्यन्-न्ती-ती,
केतयिष्यन्-न्ती-ती ;

— चिकित्सयमानः, चिकित्सयिष्यमाणः, केतयमानः,
केतयिष्यमाणः ;

[2]चिकित्-चिकित्सौ-चिकित्सः ; — —

चिकित्सितम्-तः, चिकित्सितः-तम्, चिकित्सिषितः, केतितः-तवान् ;

[3]चिकित्सुः, चिकित्सयिषुः, चिकित्सिषिषुः, केतः ;

चिकित्सितव्यम्, चिकित्सयितव्यम्, चिकित्सिषितव्यम्,
केतयितव्यम् ;

चिकित्सनीयम्, चिकित्सनीयम्, चिकित्सिषणीयम्,
केतनीयम् ;

विचिकित्स्यम्, चिकित्स्यम्, चिकित्सिष्यम्, केत्यम् ;

ईषच्चिकित्सः-दुश्चिकित्सः-सुचिकित्सः ; —

चिकित्स्यमानः, चिकित्स्यमानः, चिकित्सिष्यमाणः,
केतयमानः ;

चिकित्सः, चिकित्सः, चिकित्सिषः, केतः ;

चिकित्सितुम्, चिकित्सयितुम्, चिकित्सिषितुम्,
केतयितुम् ;

---

1. स्वार्थसन्नन्ताण्णिचि तृच्ययादेशे रूपम् । एवमुत्तरत्रापि ।
2. 'संयोगान्तस्य लोपः' (8-2-23) इति सलोपे रूपमिदम् ।
3. 'सनाशंसभिक्ष उः' (3-2-168) इत्युप्रत्ययः ताच्छीलिकः ।
A. 'मोहं **चिकित्सन्** वचसाऽस्य कृष्णः दीर्दांशुचित्तस्य सुविस्मितस्य ।' धा. का. 2-41.



[1]विचिकित्सा, चिकित्सना, चिकित्सिषा, केतना ;

चिकित्सनम्, चिकित्सनम्, चिकित्सिषणम्,
केतनम्, [A]निकेतनम् ;

चिकित्सित्वा, चिकित्सयित्वा, चिकित्सिषित्वा,
केतयित्वा ;

विचिकित्स्य, विचिकित्स्य, विचिकित्सिष्य,
विकेत्य ;

चिकित्सम् २, चिकित्सित्वा २, } चिकित्सम् २, चिकित्सयित्वा २, } चिकित्सिषम् २, चिकित्सिषित्वा २, }
केतम् २, केतयित्वा २. }

(193) " **किल श्वैत्यक्रीडनयोः** " (VI-तुदादिः-1353. सक. सेट्. पर.)

केलकः-लिका, केलकः-लिका, [2]चिकिलिषकः / चिकेलिषकः } षिका, चेकिलकः-लिका;

केलिता-त्री, केलयिता-त्री, चिकिलिषिता-चिकेलिषिता-त्री, चेकिलिता-त्री;

[3]किलन्[B]-न्ती-ती, केलयन्-न्ती, चिकिलिषन्-चिकेलिषन्-न्ती ; —

केलिष्यन्-न्ती-ती, केलयिष्यन्-न्ती-ती, चिकिलिषिष्यन्-चिकेलिषिष्यन्-न्ती-ती;

— केलयमानः, केलयिष्यमाणः, चेकिल्यमानः, चेकिलिष्यमाणः ;

किल्-किलौ-किलः; — — —

किलितम्-तः, केलितः-तम्, चिकिलिषितः-चिकेलिषितः, चेकिलितः-तवान् ;

[4]किलः, केलः, चिकिलिषुः-चिकेलिषुः, चिकेलयिषुः, चेकिलः ;

---

1. विपूर्वक**कित**धातोः संशयार्थकत्वं कोशबलाल्लभ्यते । '**विचिकित्सा** तु संशयः' **इत्यमरः** ।
2. 'रलो व्युपधाद्धलादेः संश्च' (1-2-26) इति सनः क्त्वाप्रत्ययस्य च कित्त्वं वा ।
3. 'तुदादिभ्यः शः' (3-1-77) इति शः । शस्य ङिद्वद्भावाद्गुणो न ।
4. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कः । अचोऽपवादः ।

A 'प्रबोधकाले शतमन्युविद्विषः प्रचक्रमे राज**निकेतनं** प्रति ॥' भ. का. 11-38.
'गृहं गेहोदवसितं वेश्म सद्म **निकेतनम्** ।' **इत्यमरः** ।

B. 'गतनिमेषमुदैक्षि **किलन्** विभुस्सुकृतिभिस्स जगत्तिलकाकृतिः ।
चिलितपीतपटेन चलन् इलन् अविलितोरुकृपां परितो दृशम् ॥' धा. का. 2, 78.

केलितव्यम्, केलयितव्यम्, चिकिलिषितव्यम-चिकेलिषितव्यम्, चेकिलितव्यम्;
केलनीयम्, केलनीयम्, चिकिलिषणीयम्-चिकेलिषणीयम्, चेकिलनीयम्;
केल्यम्, केल्यम्, चिकिलिष्यम्-चिकेलिष्यम्, चेकिल्यम्;
ईषत्केलः-दुष्केलः-सुकेलः; — —
किल्यमानः, केल्यमानः, चिकिलिष्यमाणः-चिकेलिष्यमाणः, चेकिल्यमानः;
केलः, केलः, चिकिलिषः-चिकेलिषः, चेकिलः;
केलितुम्, केलयितुम्, चिकिलिषितुम्-चिकेलिषितुम्, चेकिलितुम्;
किलितः, केलना, चिकिलिषा-चिकेलिषा, चिकेलयिषा, चेकिला;
केलनम्, केलनम्, चिकिलिषणम्-चिकेलिषणम्, चेकिलनम्;
किलित्वा / केलित्वा } केलयित्वा, चिकिलिषित्वा-चिकेलिषित्वा, चेकिलित्वा;
संकिल्य, प्रकेल्य, प्रचिकिलिष्य-प्रचिकेलिष्य, प्रचेकिल्य;
केलम् २ / किलित्वा २ / केलित्वा २ } केलम् २ / केलयित्वा २ } चिकिलिषम् २ / चिकिलिषित्वा २ } चिकेलिषम् २ / चिकेलिषित्वा २ }
चेकिलम् २; / चेकिलित्वा २; }
[1]केलिः-[2]केली. — — —

(194) "कीट वर्णे" (X-चुरादिः-1641. अक. सेट्. उभ.)

'कीट वरणे' इति क्षीरस्वामिसम्मतः पाठः।

कीटकः-टिका, चिकीटयिषकः-षिका;
कीटयिता-त्री, चिकीटयिषिता-त्री;
कीटयन्-न्ती, चिकीटयिषन्-न्ती;
कीटयिष्यन्-न्ती-ती, चिकीटयिषिष्यन्-न्ती-ती;
कीटयमानः, चिकीटयिषमाणः;
कीटयिष्यमाणः, चिकीटयिषिष्यमाणः;

1. 'सर्वधातुभ्यः' (द. उ. 1-46.) इत्यौणादिकः इन् प्रत्ययः।
2. स्त्रियां 'कृदिकारादक्तिनः' (ग. सू. 4-1-45) इति ङीष् वा।



कीट्-कीटौ-कीटः; —
कीटितः-तम्, चिकीटयिषितः-तवान्;
[A]कीटः, चिकीटयिषुः;
कीटयितव्यम्, चिकीटयिषितव्यम्;
कीटनीयम्, चिकीटयिषणीयम्;
कीट्यम्, चिकीटयिष्यम्;
ईषत्कीटः-दुष्कीटः-सुकीटः; —
कीट्यमानः, चिकीटयिष्यमाणः;
कीटः, चिकीटयिषः;
कीटयितुम्, चिकीटयिषितुम्;
कीटना, चिकीटयिषा;
कीटनम्, चिकीटयिषणम्;
कीटयित्वा, चिकीटयिषित्वा;
प्रकीट्य, प्रचिकीटयिष्य;
कीटम् २, / कीटयित्वा २, } चिकीटयिषम् २; / चिकीटयिषित्वा २. }

(195) "कील बन्धने" (I-भ्वादिः-524. सक. सेट्. पर.)

कीलकः-लिका, कीलकः-लिका, चिकीलिषकः-षिका, चेकीलकः-लिका;
कीलिता-त्री, कीलयिता-त्री, चिकीलिषिता-त्री, चेकीलिता-त्री;
कीलन्-न्ती, कीलयन्-न्ती, चिकीलिषन्-न्ती; —
कीलिष्यन्-न्ती-ती, कीलयिष्यन्-न्ती-ती, चिकीलिषिष्यन्-न्ती-ती;
— कीलयमानः, कीलयिष्यमाणः, चेकील्यमानः, चेकीलिष्यमाणः;
कील्-कीलौ-कीलः; — — —
[B]कीलितम्-तः, कीलितः-तम्, चिकीलिषितः, चेकीलितः-तवान्;

A. 'सौधे विटङ्कजुषि पश्यति धूसितोऽयं राजारिकीटबलचूर्णनयाऽतिपूज्यः। अर्क्येण तेन समरेष्वविशोठितस्त्वं संशुण्ठिताहितमदेन विजोढितोऽसि॥' धा. का. 3-27.

B. 'उन्मीलनश्मीलनलीलया दृशोरुत्स्मीलितक्ष्मीलितविश्वविष्टपम्। पिच्छस्रजा पीलितनीलकुन्तलं बीलेन सङ्कीलितलोकमानसम्॥' धा. का. 1.67.

[1]कीलः, कीलः, चिकीलिषुः, चिकीलयिषुः, चेकीलः ;
कीलितव्यम्, कीलयितव्यम्, चिकीलिषितव्यम्, चेकीलितव्यम् ;
कीलनीयम्, कीलनीयम्, चिकीलिषणीयम्, चेकीलनीयम् ;
कीरयम्, कील्यम्, चिकीलिष्यम्, चेकील्यम्,
ईषत्कीलः-दुष्कीलः-सुकीलः ; — —
कील्यमानः, कील्यमानः, चिकीलिष्यमाणः, चेकील्यमानः ;
[2]कीलः, कीलः, चिकीलिषः, चेकीलः ;
कीलितुम्, कीलयितुम्, चिकीलिषितुम्, चेकीलितुम् ;
[3]कीला, कीलना, चिकीलिषा, चिकीलयिषा, चेकीला ;
कीलनम्, कीलनम्, चिकीलिषणम्, चेकीलनम् ;
कीलित्वा, कीलयित्वा, चिकीलिषित्वा, चेकीलित्वा ;
विकील्य, सङ्कील्य, प्रचिकीलिष्य, प्रचेकील्य ;
कीलम् २, कीलित्वा २, } कीलम् २, कीलयित्वा २, } चिकीलिषम् २, चिकीलिषित्वा २, } चेकीलम् २; चेकीलम् २; }
[4]कीलकम्.

## (196) "कु शब्दे" (II-अदादिः-1042. अक. अनि. पर.) [अ]

'अव्यक्तशब्दे कवते, कुवते त्वार्तशब्दने ।
कौतीति शब्दमात्रे स्यात्—' (श्लो. 23) इति देवः ।

---

1. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः ।
2. 'हलश्च' (3-3-121) इति संज्ञायां घञ् ।
3. 'गुरोश्च हलः' (3-3-103) इति अप्रत्ययः । **कीला**=पशुबन्धनी रज्जुर्यस्यां निबध्यते गौः ।
4. 'क्वुन् शिल्पिसंज्ञयोः' (द. उ. 3-5.) इति संज्ञायां क्वुन् ।

[अ] 'सत्यपि हि शब्दार्थत्वे भिद्यत एवैषामभिधेयम् । तथाहि—
**कवति**स्तावत्—अव्यक्ते शब्दे वर्तते—उष्ट्रः **कोकूयते**—इति । **कुवति**रप्यार्तस्वरे वर्तते–चोकूयते वृषल इति, पीडित इत्यर्थः । **कौति**स्तु शब्दमात्रे ।' इति दैवव्याख्याने **पुरुषकारे** **न्यास**वचनमुपात्तमिहानुसन्धेयम् ।



कावकः-विका, कावकः-विका, [1]चुकूषकः-षिका, [2]चुकावयिषकः-षिका, [3]चोकूयकः-यिका ;
कोता-त्री, कावयिता-त्री, चुकूषिता-त्री, चुकावयिषिता-त्री, चोकूयिता-त्री ;
[4]कुवन्-[A]ती, कावयन्-न्ती, चुकूषन्-न्ती, चुकावयिषन्-न्ती ; —
कोष्यन्-न्ती-ती, कावयिष्यन्-न्ती-ती, चुकूषिष्यन्-न्ती-ती, चुकावयिषिष्यन्-न्ती-ती ;
कावयमानः, कावयिष्यमाणः, चोकूयमानः, चोकूयिष्यमाणः,
— — चुकावयिषमाणः, चुकावयिषिष्यमाणः ;
[5]प्रकुत्-प्रकुतौ-प्रकुतः ; — — —
कुतम्-तः, कावितः-तम्, चुकूषितः, चुकावयिषितः, चोकूयितः-तवान् ;
कवः, कावः, चुकूषुः, चुकावयिषुः, [6]चोकुवः ;
कोतव्यम्, कावयितव्यम्, चुकूषितव्यम्, चुकावयिषितव्यम्, चोकूयितव्यम् ;
कवनीयम्, कावनीयम्, चुकूषणीयम्, चुकावयिषणीयम्, चोकूयनीयम् ;
कव्यम्, काव्यम्, [7]अवश्यकाव्यम्, चुकूष्यम्, चुकावयिष्यम्, चोकूय्यम् ;
ईषत्कवः-दुष्कवः-सुकवः ; — — — —
कूयमानः, काव्यमानः, चुकूष्यमाणः, चुकावयिष्यमाणः, चोकूय्यमानः ;
[8]कवः, कावः, चुकूषः, चुकावयिषः, चोकूयः ;
कोतुम्, कावयितुम्, चुकूषितुम्, चुकावयिषितुम्, चोकूयितुम् ;

---

1. 'इको झल्' (1-2-9) इति सनः कित्त्वम् । 'अज्झनगमां सनि' (6-4-16) इति दीर्घः । अभ्यासकार्यम् ।
2. 'णिच्यच आदेशो न स्यात् द्वित्वे कर्तव्ये' (**भाष्यम्** 1-1-59) इत्यर्थस्य—'ओः पुयण्—' (7-4-80) इत्यत्र ज्ञापितत्वात् प्रथमतो वृद्ध्यावादेशौ न ।
3. 'गुणो यङ्लुकोः' (7-4-82) इति गुणोऽभ्यासस्य । 'अतो लोपः' (6-4-48) इत्यलोपः ।
4. 'अचि श्नुधातु—' (6-4-77) इत्युवङ् ।
5. 'ह्रस्वस्य पिति कृति—' (6-1-71) इति तुक् ।
6. यङन्तात् पचाद्यचि उवङ् ।
7. 'ओरावश्यके' (3-1-125) इति ण्यत् ।
8. 'ऋदोरप्' (3-3-57) इति भावे अप् ।

A. 'सोऽनूर्णुनोऽद्यौत् जनयुत् **कुवत्या** काञ्च्येव कामं स्तुवतां ब्रुवाणः ॥' धा. का. 2-47.

कुतिः, कावना, चुकूषा, चुकावयिषा, चोकूया ;

कवनम्, कावनम्, चुकूषणम्, चुकावयिषणम्, चोकूयनम् ;

कुत्वा, कावयित्वा, चुकूषित्वा, चुकावयिषित्वा, चोकूयित्वा ;

प्रकुत्य, प्रकाव्य, प्रचुकूष्य, प्रचुकावयिष्य, प्रचोकूय्य ;

कावम् २, कुत्वा २, } कावम् २, कावयित्वा २, } चुकूषम् २, चुकूषित्वा २, } चुकावयिषम् २, चुकावयिषित्वा २, } चोकूयम् २ ; चोकूयित्वा २; }

[1]कविः

## (197) "कुक आदाने" (I-भ्वादिः-91. सक. सेट्. आत्म.)

कोककः-किका, कोककः-किका, [2]चुकुकिषकः-चुकोकिषकः-षिका, चोकुककः-किका ;

कोकिता-त्री, कोकयिता-त्री, चुकुकिषिता-चुकोकिषिता-त्री, चोकुकिता-त्री;

— कोकयन्-न्ती, कोकयिष्यन्-न्ती-ती ; —

कोकमानः, कोकयमानः, चुकुकिषमाणः-चुकोकिषमाणः, चोकुक्यमानः;

कोकिष्यमाणः, कोकयिष्यमाणः, चुकुकिषिष्यमाणः-चुकोकिषिष्यमाणः, चोकुकिष्यमाणः ;

कुक्-कुकौ-कुकः ; — —

[3]कुकितम् / कोकितम् } तः, कोकितः-तम्, चुकुकिषितः-चुकोकिषितः, चोकुकितः-तवान् ;

[4]कोकः, कोकः, [5]कोकनः, चुकुकिषुः-चुकोकिषुः, चोकुकः ;

कोकितव्यम्, कोकयितव्यम्, चुकुकिषितव्यम्-चुकोकिषितव्यम्, चोकुकितव्यम्;

कोकनीयम्, कोकनीयम्, चुकुकिषणीयम्-चुकोकिषणीयम्-चोकुकनीयम् ;

कोक्यम्, कोक्यम्, चुकुकिष्यम्-चुकोकिष्यम्, चोकुक्यम् ;

ईषत्कोकः-दुष्कोकः-सुकोकः ; — —

---

1. औणादिकः 'अच इः' (द. उ. 1-67) इति इः प्रत्ययः।
2. 'रलो व्युपधात्—' (1-2-26) इति सनः कित्त्वविकल्पः। तेन द्वे रूपे।
3. 'उदुपधात् भावादिकर्मणोरन्यतरस्याम्' (1-2-21) इति निष्ठायाः कित्त्वं वा।
4. 'देवमेषसेवादयः पचादिषु द्रष्टव्याः' (भाष्यम्. 3 1-135) इत्यत्र आदिपदेन अस्य ग्रहणम्। तेन इगुपधलक्षणं कं बाधित्वा कर्तरि पचाद्यच्। **कोकः**-चक्रवाकः।
5. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः।



कुक्यमानः, कोक्यमानः, चुकुकिष्यमाणः-चुकोकिष्यमाणः, चोकुक्यमानः ;

कोकः, कोकः, चुकुकिषः-चुकोकिषः, चोकुकः ;

कोकितुम्, कोकयितुम्, चुकुकिषितुम्-चुकोकिषितुम्, चोकुकितुम्;

कुक्तिः, कोकना, चुकुकिषा-चुकोकिषा, चुकोकयिषा, चोकुका ;

[1]प्रकोकनम्-प्रकोकणम्, कोकनम्, चुकुकिषणम्-चुकोकिषणम्, चोकुकनम्;

[2]कुकित्वा-कोकित्वा, कोकयित्वा, चुकुकिषित्वा-चुकोकिषित्वा, चोकुकित्वा;

प्रकुक्य, प्रकोक्य, प्रचुकुकिष्य-प्रचुकोकिष्य, प्रचोकुक्य ;

कोकम् २, कुकित्वा २, कोकित्वा २, } कोकम् २, कोकयित्वा २, } चुकुकिषम् २, चुकुकिषित्वा २, चुकोकिषम् २, चुकोकिषित्वा २, } चोकुकम् २ ; चोकुकित्वा २; }

[3]कुक्कुरः.

## (198) "कुङ् शब्दे" (I-भ्वादिः-951. अक. अनि. आत्म.) [अ]

'अव्यक्तशब्दे कवते, कुवते त्वार्तशब्दने।

कौतीति शब्दमात्रे स्यात्—' (श्लो. 23) इति **देवः**।

कावकः-विका, कावकः-विका, चुकूषकः-षिका, [4]कोकूयकः-यिका ;

कोता-त्री, कावयिता-त्री, चुकूषिता-त्री, कोकूयिता-त्री ;

— कावयन्-न्ती, कावयिष्यन्-न्ती-ती ; —

कवमानः, कावयमानः, चुकूषमाणः, कोकूयमानः ;

---

1. 'हलश्चेजुपधात्' (8-4-31) इति णत्वं वा भवति।
2. 'रलो व्युपधात्—' (1-2-26) इति क्त्वाप्रत्ययस्य कित्त्वं वा भवति।
3. औणादिके उरच् प्रत्यये (द. उ. 8-23) कुगागमो निपात्यते। अतिशयेन शब्दं करोतीति=**कुक्कुरः**=श्वा।
4. '**न कवतेर्यङि**' (7-4-63) इति अभ्यासे चुत्वनिषेधः। 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः। एवं यङन्ते सर्वत्र बोध्यम्।

[अ] "सत्यपि हि शब्दार्थत्वे भिद्यत एवैषामभिधेयम्। तथाहि—**कवतिस्तावत्**—अव्यक्ते शब्दे वर्तते—उष्ट्रः **कोकूयते** इति। **कुवतिरपि**—आर्तस्वरे वर्तते—**चोकूयते** वृषल इति; पीडित इत्यर्थः। **कौतिस्तु** शब्दमात्रे।" इति दैवव्याख्याने पुरुषकारे उपात्तं व्याख्यानमिहानुसन्धेयम्।

कोष्यमाणः, काविष्यमाणः, चुकूषिष्यमाणः, कोकूयिष्यमाणः ;
कुत्-कुतौ-कुतः ; — — —
कुतम्-[A]तः, कावितः-तम्, चुकूषितः, कोकूयितः-तवान् ;
कवः, कावः, चुकूषुः, चुकावयिषुः, कोकुवः ;
कोतव्यम्, कावयितव्यम्, चुकूषितव्यम्, कोकूयितव्यम् ;
कवनीयम्, कावनीयम्, चुकूषणीयम्, कोकूयनीयम् ;
कव्यम्, अवश्यकाव्यम्, काव्यम्, चुकूष्यम्, कोकूय्यम् ;
ईषत्कवः-दुष्कवः-सुकवः ; — —
[1]कूयमानः, काव्यमानः, चुकूष्यमाणः, कोकूय्यमानः ;
कवः, कावः, चुकूषः, कोकूयः ;
कोतुम्, कावयितुम्, चुकूषितुम्, कोकूयितुम् ;
कुतिः, कावना, चुकूषा, चुकावयिषा, कोकूया ;
कवनम्, कावनम्, चुकूषणम्, कोकूयनम् ;
कुत्वा, कावयित्वा, चुकूषित्वा, कोकूयित्वा ;
प्रकुत्य, संकाव्य, प्रचुकूष्य, प्रकोकूय्य ;
कावम् २, } कावम् २, } चुकूषम् २, } कोकूयम् २ ; }
कुत्वा २, } कावयित्वा २, } चुकूषित्वा २, } कोकूयित्वा २. }

**(199) "कुङ् (आर्त) शब्दे"** (VI-तुदादिः-1401. अक. अनि. आत्म.)

**कुटादिः ।**

'अव्यक्तशब्दे कवते, कुवते त्वार्तशब्दने ।

कौतीति शब्दमात्रे स्यात्—' (श्लो. 23) इति देवः ।

कावकः-विका, कावकः-विका, चुकूषकः-षिका, चोकूयकः-यिका; इत्यादिरूपाणि आदादिक (196) कुधातुवत् ण्यन्तात् सन्नन्तात् यङन्ताच्च ज्ञेयानि । शुद्धाद्धातोः कुटादित्वात् रूपाणि लिख्यन्ते—

1. 'अकृत्सार्वधातुकयोः—' (7-4-25) इति दीर्घः ।
A. 'श्रुत्यन्तवाचा ध्रुवया प्रदूनं घोरद्रवच्चक्रजिताशितारिम् ।
क्षिप्तार्दैवक्त्रं गवमानभूर्शं रै त्वां घुतानां कुत्वशाङ्कचोकैः ॥' धा. का. 2-35.



[1]कुता-त्री, [2]कुवमानः,[A] कुष्यमाणः, कुत्-कुतौ-कुतः, कुतम्-तः-तवान्, कुवः, कुतव्यम्, कुवनीयम्, [3]कुयम्, [4]अवश्यकाव्यम्, ईषत्कुवः-दुष्कुवः-सुकुवः, कूयमानः, कुवः, कुतुम्, कुतिः, कुवनम्, कुत्वा, अवकुत्य, कावम् २, कुत्वा २, [5]कुररः इति ।

**(200) "कुच शब्दे तारे"** (I-भ्वादिः-184. सक. सेट्. पर.)

कोचकः-चिका, कोचकः-चिका, चुकुचिषकः-[6]चुकोचिषकः-षिका, चोकुचकः-चिका ;
कोचिता-त्री, कोचयिता-त्री, चुकुचिषिता-चुकोचिषिता-त्री, चोकुचिता-त्री ;
कोचन्-न्ती, कोचयन्-न्ती, चुकुचिषन्-चुकोचिषन्-न्ती ; —
कोचिष्यन्-न्ती-ती, कोचयिष्यन्-न्ती-ती, चुकुचिषिष्यन्-चुकोचिषिष्यन्-न्ती-ती ;
— कोचयमानः, कोचयिष्यमाणः, चोकुच्यमानः, चोकुचिष्यमाणः ;
[7]कुचितम्-कोचितम्, कोचितः-तम्, चुकुचिषितः-चुकोचिषितः, चोकुचितः-तवान् ;
कुचः, कोचः, चुकुचिषुः-चुकोचिषुः, चोकुचः ;
कोचितव्यम्, कोचयितव्यम्, चुकुचिषितव्यम्-चुकोचिषितव्यम्, चोकुचितव्यम् ;
कोचनीयम्, कोचनीयम्, चुकुचिषणीयम्-चुकोचिषणीयम्, चोकुचनीयम् ;
कोच्यम्, कोच्यम्, चुकुचिष्यम्-चुकोचिष्यम्, चोकुच्यम् ;
ईषत्कोचः-दुष्कोचः-सुकोचः ; — —
कुच्यमानः, कोच्यमानः, चुकुचिष्यमाणः-चुकोचिष्यमाणः, चोकुच्यमानः ;

1. 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (1-2-1) इति ङिद्भावात् गुणो न ।
2. '**तुदादिभ्यः** शः' (3-1-77) इति शः । उवङ् ।
3. ङिद्भावात् यति गुणो न ।
4. 'ओरावश्यके' (3-1-125) इति ण्यत् । णित्वात् ङित्वं न ।
5. '**कुवः** क्रन्' (द. उ. 8-63) इति क्रन् प्रत्ययः । **कुररः**=पक्षिविशेषः ।
6. 'रलो व्युपधात्–' (1-2-26) इति सनः कित्वविकल्पः ।
7. 'उदुपधात्–' (1-2-21) इति निष्ठायाः कित्वविकल्पः ।
A. 'नूत्या किं भयधूतविद्रुतगुवल्लोकं तदा तद्भुवत्-
कोदण्डं **कुवमान**मैक्षि दलितं भोजेश्वराकूतवत् ॥' धा. का. 2-82.

सङ्कोचः, कोचः, चुकुचिषः-चुकोचिषः, चोकुचः ;

कोचितुम्, कोचयितुम्, चुकुचिषितुम-चुकोचिषितुम्, चोकुचितुम् ;

कुक्तिः, कोचना, चुकुचिषा-चुकोचिषा, चुकोचयिषा, चोकुचा ;

कोचनम्, कोचनम्, चुकुचिषणम्-चुकोचिषणम्, चोकुचनम् ;

[1]कुचित्वा }<br>कोचित्वा } कोचयित्वा, चुकुचिषित्वा-चुकोचिषित्वा, चोकुचित्वा ;

सङ्कुच्य, सङ्कोच्य, सञ्चुकुचिष्य-सञ्चुकोचिष्य, सञ्चोकुच्य ;

कोचम् २, }कोचम् २, }चुकुचिषम् २-चुकोचिषम् २, }<br>कुचित्वा २, कोचित्वा २, }कोचयित्वा २, }चुकुचिषित्वा २-चुकोचिषित्वा २, }<br>चोकुचम् २ ; }<br>चोकुचित्वा २. }

## (201) "कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु"

(I-भ्वादिः-857. सक. सेट्. पर.) **ज्वलादिः** ।

'सङ्कोचे कुचतीति स्यात्, कोचेत् सम्पर्चनादिषु।' (श्लो-54) इति **देवः** । ज्वलादित्वात् '**ज्वलितिकसन्तेभ्यो णः**' (3-1-140) इति कर्तरि वा णः प्रत्ययः । [A]**कोचः**-**कुचः** । अनुपसृष्टादेव । उपसृष्टात्तु **उत्कोचः** । अन्यानि सर्वाणि रूपाणि कुचधातुवत् (200) ज्ञेयानि ।

## (202) "कुच सङ्कोचने" (VI-तुदादिः-1368-अक.सेट्.पर. **कुटादिः** ।)

'सङ्कोचे कुचतीति स्यात्, कोचेत् सम्पर्चनादिषु।' (श्लो-54) इति **देवः** ।

कोचकः-चिका, [2]कुचिता-त्री, [3]कुचन्[B]-न्ती-ती, कुचिष्यन्-न्ती-ती, कुक्-कुचौ-कुचः, कुचितम्-तः-तवान्, कुचितव्यम्, कुचनीयम्, कुच्यम्,

1. 'रलो व्युपधात्–' (1-2-26) इति क्त्वायाः कित्त्वविकल्पनात् पक्षे गुणः ।
2. '**गाङ्कुटादिभ्योऽञ्णिन्ङित्**' (1-2-1) इति ङिद्वद्भावान्न गुणः । एवं तव्यदादिष्वपि ज्ञेयम् ।
3. '**तुदादिभ्यः**—' (3-1-77) इति शः विकरणप्रत्ययः । तस्य 'सार्वधातुकमपित्' (1-2-4) इति ङिद्वद्भावान्न गुणः ।

A. 'सेहे च रामाजनखेलनं या कुचोरसीदत्परिशद्रुतोया ।<br>क्रोशर्जनाः **कोच**गलान् मरालान बोधन्ति यत्राम्बुरुहां विकासे ॥' धा.का. 2·24.

B. 'ततोऽतिकुटिलाशयैः प्रपुटितैः **कुचज्जी**वितैः गुजद्भिरपि सैनिकैः सुगुडितां ङिपद्भिर्जनान् । सुधाच्छुरितविस्फुटस्मितरुचैव धैर्यं मुटन् धनुस्त्रुटनतो मनाक् प्रतुटनाय शालामगात् ॥' धा. का. 2-80.



ईषत्कुचः-दुष्कुचः-सुकुचः, कुच्यमानः, [1]सङ्कोचः, कुचितुम्, [2]निकुचितिः, [3]कोचनम्-सङ्कोचनम्-कुचनम्, [4]कुचित्वा, सङ्कुच्य, कोचम् २, कुचित्वा २; इति शुद्धाद्धातो रूपाणि । ण्यन्तात्-सन्नन्तात्-यङन्ताच्च पूर्वोक्त [200] कुचधातुवद्रूपाणि ज्ञेयानि ।

## (203) "कुजु स्तेयकरणे" (I-भ्वादिः-199. सक. सेट्-पर.)

कोजकः-जिका, कोजकः-जिका, [5]चुकुजिषकः-चुकोजिषकः-षिका, चोकुजकः-जिका ;

कोजिता-त्री, कोजयिता-त्री, चुकुजिषिता-चुकोजिषिता-त्री, चोकुजिता-त्री ;

कोजन्-न्ती, कोजयन्-न्ती, चुकुजिषन्-चुकोजिषन्-न्ती ; —

कोजिष्यन्-न्ती-ती, कोजयिष्यन्-न्ती-ती, चुकुजिषिष्यन्-चुकोजिषिष्यन्-न्ती-ती;

— कोजयमानः, कोजयिष्यमाणः, चोकुज्यमानः, चोकुजिष्यमाणः ;

कुक्-कुजौ-कुजः ; — — —

[6]कुक्तम्-तः, कोजितः-तम्, चुकुजिषितः-चुकोजिषितः, चोकुजितः-तवान् ;

1. 'निष्ठायामनिट इति वक्तव्यम्' (वा. 7-3-52) इति वचनात्, अस्य निष्ठायां सेट्त्वात् 'चजोः—' (7-3-52) इति कुत्वं न भवति ।
2. 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इति वचनात्, अस्य ग्रहादित्वात् इड् भवति —इति **प्रक्रियासर्वस्वे** ।
3. 'कुच **सङ्कोचने**' इति निर्देशबलात् **कुटादि**त्वेऽपि ल्युटि परं गुणो भवत्येव इति **काश्यपः** । 'सम्' इत्युपसर्गपूर्वकात् **कुच**धातोरेव **कुटादि**त्वेऽपि गुणः, अन्यत्र न—इति **केचित्** । तेषां मते '**कुचनम्**' इत्येव । निरुपसृष्टादपि गुण एव **इत्यन्ये** । तन्मते '**कोचनम्**' इति भवति ।
4. 'रलो व्युपधात् हलादेः संश्च' (1-2-26) इति वैकल्पिककित्त्वं बाधित्वा, पूर्वविप्रतिषेधेन '**गाङ्कुटादिभ्यः**–' (1-2-1) इति विहितं नित्यङित्त्वमेव भवति। अत एव, 'अनुदात्तङित आत्मनेपदम्' (1-3-12) इत्यत्र 'उपदेशे' इत्यस्य ङिदंशेऽन्वयस्य सार्थक्यं भवति ।
5. 'रलो व्युपधात्–' (1-2-26) इति सनः कित्त्वविकल्पः । तेन रूपद्वयम् ।
6. क्त्वायां विकल्पितेट्कत्वात् 'यस्य विभाषा' (7-2-15) इति निष्ठायामनिट्त्वम् कुत्वम् च ।

[1]कुजः, कोजः, चुकुजिषुः-चुकोजिषुः, चुकोजयिषुः, चोकुजः ;

कोजितव्यम्, कोजयितव्यम्, चुकुजिषितव्यम्-चुकोजिषितव्यम्, चोकुजितव्यम् ;

कोजनीयम्, कोजनीयम्, चुकुजिषणीयम्-चुकोजिषणीयम्, चोकुजनीयम् ;

[2]कोग्यम्, कोज्यम्, चुकुजिष्यम्-चुकोजिष्यम्, चोकुज्यम् ;

ईषत्कोजः-दुष्कोजः-सुकोजः ; — —

कुज्यमानः, कोज्यमानः, चुकुजिष्यमाणः-चुकोजिष्यमाणः, चोकुज्यमानः ;

कोगः, कोजः, चुकुजिषः-चुकोजिषः, चोकुजः,

कोजितुम्, कोजयितुम्, चुकुजिषितुम्-चुकोजिषितुम्, चोकुजितुम् ;

कुक्तिः, कोजना, चुकुजिषा-चुकोजिषा, चोकुजा ;

कोजनम्, कोजनम्, चुकुजिषणम्-चुकोजिषणम्, चोकुजनम् ;

[3]कुजित्वा, कोजित्वा, कुक्त्वा, } कोजयित्वा, चुकुजिषित्वा-चुकोजिषित्वा, चोकुजित्वा ;

सङ्कुज्य, सङ्कोज्य, प्रचुकुजिष्य-प्रचुकोजिष्य, प्रचोकुज्य;

कोजम् २, कुजित्वा २, कोजित्वा, २ कुक्त्वा २, } कोजम् २, कोजयित्वा, } चुकुजिषम् २, चुकुजिषित्वा २,

चुकोजिषम् २, चुकोजिषित्वा २, } चोकुजम् २ ; चोकुजित्वा २. }

## (204) "कुट कौटिल्ये" (VI-तुदादिः-1366. अक. सेट्.पर. कुटादिः।)

कोटकः-टिका, कोटकः-टिका, [4]चुकुटिषकः-षिका, चोकुटकः-टिका ;

---

1. 'इगुपधज्ञाप्रीकिरः कः' (3-1-135) इति कर्तरि कः ।
2. निष्ठायामनिट्त्वात् 'चजोः कु घिण्ण्यतोः' (7-3-52) इति ण्यति घञि च कुत्वम् ।
3. 'रलो व्युपधात्–' (1-2-26) इति क्त्वाप्रत्ययस्य कित्त्वविकल्पः । 'उदितोवा' (7-2-56) इति क्त्वायां वा इट् ।
4. 'रलो व्युपधात्–' (1-2-26) इति विहितं वैकल्पिकं कित्त्वं त्वस्य न भवति । 'गाङ्कुटादिभ्यः–' (1-2-1) इति विहितेन ङिद्वद्भावेन पूर्वविप्रतिषेधेन बाधात् । पूर्वविप्रतिषेधाश्रयणे प्रमाणं तु—'अनुदात्तङित–' (1-3-12) इत्यत्र ङिदंशे उपदेशपदसम्बन्ध एव । एवं कुटादिषु सर्वेष्वपि इदुदुपधेषु ङित्वमेवेति बोध्यम् ।



[1]कुटिता-त्री, कोटयिता-त्री, चुकुटिषिता-त्री, चोकुटिता-त्री ;

[2]कुटन्-न्ती-ती, कोटयन्-न्ती, चुकुटिषन्-न्ती ; —

कुटिष्यन्-न्ती-ती, कोटयिष्यन्-न्ती-ती, चुकुटिषिष्यन्-न्ती-ती ; —

— कोटयमानः, कोटयिष्यमाणः, चोकुटयमानः, चोकुटिष्यमाणः ;

कुट्-कुटौ-कुटः ; — — —

कुटितम्-तः, कोटितः-तम्, चुकुटिषितः, चोकुटितः-तवान् ;

कुटः, कोटः, चुकुटिषुः, चुकोटयिषुः, चोकुटः ;

कुटितव्यम्, कोटयितव्यम्, चुकुटिषितव्यम्, चोकुटितव्यम् ;

[3]प्रनिकुटनीयम्, कोटनीयम्, चुकुटिषणीयम्, चोकुटनीयम् ;

कोट्यम्, कोटयम्, चुकुटिष्यम्, चोकुटयम् ;

ईषत्कुटः-दुष्कुटः-सुकुटः ; — —

कुटयमानः, कोटयमानः, चुकुटिष्यमाणः, चोकुटयमानः ;

कोटः, कोटः, चुकुटिषः, चोकुटः ;

[A]कुटितुम्, कोटयितुम्, चुकुटिषितुम्, चोकुटितुम् ;

कुट्टिः, कुटिः,[4] कोटना, चुकुटिषा, चुकोटयिषा, चोकुटा;

कुटनम्, कोटनम्, चुकुटिषणम्, चोकुटनम् ;

कुटित्वा, कोटयित्वा, चुकुटिषित्वा, चोकुटित्वा ;

प्रकुटय, प्रकोटय, प्रचुकुटिष्य, प्रचोकुटय ;

कोटम् २, कुटित्वा २, } कोटम् २, कोटयित्वा २, } चुकुटिषम् २, चुकुटिषित्वा २, } चोकुटम् २ ; चोकुटित्वा २; }

[5]कुटिलः.[B]

---

1. 'गाङ्कुटादिभ्यः–' (1-2-1) इति ङित्त्वम् । तेन गुणो न ।
2. 'तुदादिभ्यः शः' (3-1-77) इति शः । 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम् वा।
3. 'शेषे विभाषाऽकखादावषान्त उपदेशे' (8-4-18) इति सूत्रे 'अकखादौ' इति पर्युदासात् णत्वं न ।
4. 'इक् कृष्यादिभ्यः' (वा. 3-3-108) इति भावेऽकर्तरि च कारके इक् । कौटिल्यमर्थः।
5. बाहुलकादिलच् प्रत्ययः ।

A. 'यूयं संकुटितुं यस्मात् कालेऽस्मिन् अध्यवस्यथ ॥' भ. का. 7·91.

B. 'ततोऽतिकुटिलाशयैः प्रपुटितैः कुचज्जीवितैः गुञ्जद्भिरपि सैनिकैः सुगुडितां द्विपद्भिर्जनात् ।' धा. का. 2·80.

(205) "कुट छेदने" (X-चुरादिः-1699. सक. सेट्. आत्म.)

आकुस्मीयः। '—अवक्षेपणे' इति केचित्। [अ]

कोटकः-टिका, चुकोटयिषकः-षिका[1] ;
कोटयिता-त्री, चुकोटयिषिता-त्री ;
[2]कोटयमानः, चुकोटयिषमाणः,
कोटयिष्यमाणः, चुकोटयिषिष्यमाणः ;
कोट्-कोटौ-कोटः ; — —
कोटितः-तम्, चुकोटयिषितः-तवान् ;
कोटः, चुकोटयिषुः ;
कोटयितव्यम्, चुकोटयिषितव्यम् ;
[3]कोटनीयम्, चुकोटयिषणीयम् ;
कोट्यम्, चुकोटयिष्यम् ;
ईषत्कोटः-दुष्कोटः-सुकोटः ; —
कोट्यमानः, चुकोटयिष्यमाणः ;
कोटः, चुकोटयिषः ;
कोटयितुम्, चुकोटयिषितुम् ;
कोटना, चुकोटयिषा ;
कोटनम्, चुकोटयिषणम् ;
कोटयित्वा, चुकोटयिषित्वा ;
प्रकोट्य, प्रचुकोटयिष्य ;
कोटम् २, कोटयित्वा २, } चुकोटयिषम् २ ; चुकोटयिषित्वा २. }

1. धातोः अनेकाच्त्वात् 'धातोरेकाच—' (3-1-22) इति यङ् न।
2. 'आ कुस्मादात्मनेपदिनः' (गणसूत्रम् चुरादौ) इति वचनात् शानजेव।
3. 'णेरनिटि' (6-4-51) इति णिलोपः।

[अ] "क्रुट छेदने" इत्यस्य पाठान्तरमिदम्।



(206) "कुटुम्ब धारणे" (X-चुरादिः-1679. सक. सेट्. आत्म.)

आकुस्मीयः। [अ]

कुटुम्बकः-म्बिका, चुकुटुम्बयिषकः-षिका ;[1]
कुटुम्बयिता-त्री, चुकुटुम्बयिषिता-त्री ;
कुटुम्बयमानः, चुकुटुम्बयिषमाणः ;
कुटुम्बयिष्यमाणः, चुकुटुम्बयिषिष्यमाणः ;
[2]कुटुम्बितम्-तः, चुकुटुम्बयिषितः-तवान् ;
कुटुम्बः, चुकुटुम्बयिषुः ;
कुटुम्बयितव्यम्, चुकुटुम्बयिषितव्यम् ;
कुटुम्बनीयम्, चुकुटुम्बयिषणीयम् ;
कुटुम्ब्यम्, चुकुटुम्बयिष्यम् ;
ईषत्कुटुम्बः-दुष्कुटुम्बः-सुकुटुम्बः ; —
कुटुम्ब्यमानः, चुकुटुम्बयिष्यमाणः ;
[3]कुटुम्बः, चुकुटुम्बयिषः ;
कुटुम्बयितुम्, चुकुटुम्बयिषितुम् ;
कुटुम्बना, चुकुटुम्बयिषा ;
कुटुम्बनम्, चुकुटुम्बयिषणम् ;
कुटुम्बयित्वा, चुकुटुम्बयिषित्वा ;
प्रकुटुम्ब्य, प्रचुकुटुम्बयिष्य ;
कुटुम्बम् २, कुटुम्बयित्वा २, } चुकुटुम्बयिषम् २ ; चुकुटुम्बयिषित्वा २. }

(207) "कुट्ट छेदनभर्त्सनयोः"

(X-चुरादिः-1558. सक. सेट्. उभ.) 'पूरणे' इत्येके।

कुट्टकः-ट्टिका, चुकुट्टयिषकः-षिका ;

[अ] 'तत्रि कुटुम्बधारणे' इत्यत्र 'कुटुम्ब' इति पृथग् धातुरिति चान्द्राणां मतेन लिख्यते।

1. अनेकाच्त्वात् यङ् न।
2. 'निष्ठायां सेटि' (6-4-52) इति णिलोपः।
3. कुटुम्ब्यते=धार्यते पोष्यते इति कुटुम्बः=पोष्यवर्गः। कर्मणि घञ्।

कुट्टयिता-त्री, चुकुट्टयिषिता-त्री ;
कुट्टयन्-न्ती, चुकुट्टयिषन्-न्ती ;
कुट्टयिष्यन्-न्ती-ती, चुकुट्टयिषिष्यन्-न्ती-ती ;
कुट्टयमानः, चुकुट्टयिषमाणः ;
कुट्टयिष्यमाणः, चुकुट्टयिषिष्यमाणः ;
कुट्-कुट्टौ-कुट्टः ; —
कुट्टितम्-तः, चुकुट्टयिषितः-तवान् ;
कुट्टः, [1]कुट्टाकः[A]-कुट्टाकी,[2] चुकुट्टयिषुः ;
कुट्टयितव्यम्, चुकुट्टयिषितव्यम् ;
कुट्टनीयम्, चुकुट्टयिषणीयम् ;
कुट्ट्यम्, चुकुट्टयिष्यम् ;
ईषत्कुट्टः-दुष्कुट्टः-सुकुट्टः ; —
कुट्ट्यमानः, चुकुट्टयिष्यमाणः ;
कुट्टः, चुकुट्टयिषः ;
कुट्टयितुम्, चुकुट्टयिषितुम् ;
कुट्टना, चुकुट्टयिषा ;
[B]कुट्टनम्, चुकुट्टयिषणम् ;
कुट्टयित्वा, चुकुट्टयिषित्वा ;
सङ्कुट्ट्य, सञ्चुकुट्टयिष्य ;
कुट्टम् २, } चुकुट्टयिषम् २ ; }
कुट्टयित्वा २, } चुकुट्टयिषित्वा २. }

(208) " कुट्ट प्रतापने " (X-चुरादिः-1703. सक. सेट्. आत्म.)

आकुस्मीयः ।

शत्रादेशं विना धातोरस्य अन्यानि सर्वाण्यपि रूपाणि पूर्वोक्त (207) **कुट्टयति**वद्बोध्यानि ।

1. 'जल्पभिक्षलुण्ठ**कुट्ट**वृङः षाकन्' (3-2-155) इति ताच्छीलिकः षाकन् प्रत्ययः ।
2. स्त्रियां षित्वात् 'षिद्गौरादिभ्यश्च' (4-1-41) इति ङीष् भवति ।

A. 'पट्टाभिषेकमभिलष्यति फालदेशे **कुट्टा**कभावकुतुकं कुरुते स्म भीमः ॥'
**भारतचम्पूः** 1-83.

B. 'सा पूतना च शिशुभक्षण**कुट्टनो**त्का जघ्ने प्रपुट्टितकृपेण विचुट्टिताघा ।' धा.का.3-16.



(209) " कुठि प्रतीघाते " (I-भ्वादिः-342. सक. सेट्. पर.)

[1]कुण्ठकः-ण्ठिका, कुण्ठकः-ण्ठिका, चुकुण्ठिषकः-षिका, चोकुण्ठकः-ण्ठिका ;
कुण्ठिता-त्री, कुण्ठयिता-त्री, चुकुण्ठिषिता-त्री, चोकुण्ठिता-त्री ;
कुण्ठन्-न्ती, कुण्ठयन्-न्ती, चुकुण्ठिषन्-न्ती ; —
कुण्ठिष्यन्-न्ती-ती, कुण्ठयिष्यन्-न्ती-ती, चुकुण्ठिषिष्यन्-न्ती-ती ;
[2]व्यतिकुण्ठमानः, कुण्ठयमानः, चोकुण्ठ्यमानः ;
व्यतिकुण्ठिष्यमाणः, कुण्ठयिष्यमाणः, चोकुण्ठिष्यमाणः ;
कुन्-कुण्ठौ-कुण्ठः ; — —
कुण्ठितम्-[A]तः, कुण्ठितः-तम्, चुकुण्ठिषितः, चोकुण्ठितः-तवान् ;
कुण्ठः, [3]वैकुण्ठः, कुण्ठः, चुकुण्ठिषुः, चुकुण्ठयिषुः, चोकुण्ठः ;
कुण्ठितव्यम्, कुण्ठयितव्यम्, चुकुण्ठिषितव्यम्, चोकुण्ठितव्यम् ;
कुण्ठनीयम्, कुण्ठनीयम्, चुकुण्ठिषणीयम्, चोकुण्ठनीयम् ;
कुण्ठ्यम्, कुण्ठ्यम्, चुकुण्ठिष्यम्, चोकुण्ठ्यम् ;
ईषत्कुण्ठः-दुष्कुण्ठः-सुकुण्ठः ; — —
कुण्ठ्यमानः, कुण्ठ्यमानः, चुकुण्ठिष्यमाणः, चोकुण्ठ्यमानः ;
कुण्ठः, कुण्ठः, चुकुण्ठिषः, चोकुण्ठः ;
कुण्ठितुम्, कुण्ठयितुम्, चुकुण्ठिषितुम्, चोकुण्ठितुम् ;
कुण्ठा, कुण्ठना, चुकुण्ठिषा, चुकुण्ठयिषा, चोकुण्ठा ;
कुण्ठनम्, कुण्ठनम्, चुकुण्ठिषणम्, चोकुण्ठनम् ;
कुण्ठित्वा, कुण्ठयित्वा, चुकुण्ठिषित्वा, चोकुण्ठित्वा ;
प्रकुण्ठ्य, विकुण्ठ्य, प्रचुकुण्ठिष्य, प्रचोकुण्ठ्य ;
कुण्ठम् २, } कुण्ठम् २, } चुकुण्ठिषम् २, } चोकुण्ठम् २ ; }
कुण्ठित्वा २, } कुण्ठयित्वा २, } चुकुण्ठिषित्वा २, } चोकुण्ठित्वा २. }

1. 'इदितो नुम् धातोः' (7-1-58) इति नुम् । ष्टुत्वेन णकारः ।
2. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति कर्मव्यतीहारे आत्मनेपदम् ।
3. विगतः कुण्ठः यस्याः सा **विकुण्ठा** । तस्या अपत्यं **वैकुण्ठः**, शिवाद्यण् । कर्तरि अच् । यद्वा, विकुण्ठ एव **वैकुण्ठः** अप्रतिहतशक्तिक इत्यर्थः । विविधा कुण्ठा माया अस्यास्तीति वा **वैकुण्ठः** ।

A. 'शठत्वमार्गे शुठितैर**कुण्ठितै**र्लुण्ठिताशुण्ठितसौहृदान्वितैः ।' धा. का. 1-45,

(210) "कुठि वेष्टने" (X-चुरादिः-1584. अक. सेट्. उभ.)

इदित्करणात् णिचो वैकल्पिकत्वम्। प्रायेणायं 'अव' पूर्वकः। [A]अवकुण्ठयन्। 'गुडि वेष्टने' (X-1584) इति धातोः पाठान्तरमिदम्। णिजभावपक्षे पूर्वलिखित (209) कुठिधातुवत्-केवलात् ण्यन्तात् सन्नन्तात् यङन्ताच्च रूपाणि ज्ञेयानि। णिजभावपक्षे 'शेषात् कर्तरि-' (1-3-78) इति परस्मैपदमेव। ण्यन्तात्तु सनि इमानि रूपाणि—

चुकुण्ठयिषकः-षिका, चुकुण्ठयिषिता-त्री, चुकुण्ठयिषन्-न्ती,
चुकुण्ठयिषिष्यन्-न्ती-ती, चुकुण्ठयिषमाणः, चुकुण्ठयिषिष्यमाणः,
चुकुण्ठयिषितः-तवान्, चुकुण्ठयिषुः, चुकुण्ठयिषितव्यम्,
चुकुण्ठयिषणीयम्, चुकुण्ठयिष्यम्, ईषच्चुकुण्ठयिषः —
दुष्चुकुण्ठयिषः-सुचुकुण्ठयिषः, चुकुण्ठयिष्यमाणः, चुकुण्ठयिषः;
चुकुण्ठयिषितुम्, चुकुण्ठयिषा, चुकुण्ठयिषणम्, चुकुण्ठयिषित्वा;
सञ्चुकुण्ठयिष्य, चुकुण्ठयिषम् २, चुकुण्ठयिषित्वा २. इति विशेषः।

(211) "कुड बाल्ये" (VI-तुदादिः-1383. अक. सेट्. पर.) कुटादिः।

'कुट कौटिल्ये' (204) इति धातुवत् सर्वाणि रूपाणि ज्ञेयानि।

(212) "कुडि वैकल्ये" (I-भ्वादिः-322. अक. सेट्. पर.)

'वैकल्यदाहरक्षासु कुण्डेत् कुण्डेत कुण्डयेत्।' (श्लो. 88) इति देवः। 'कुठि प्रतिघाते' (209) इति भौवादिकधातुवत् सर्वाणि रूपाणि ज्ञेयानि।

(213) "कुडि दाहे" (I-भ्वादिः-270. सक. सेट्. आत्म.)

"वैकल्यदाहरक्षासु कुण्डेत् कुण्डेत कुण्डयेत्।' (श्लो. 88) इति देवः। कुण्डमानः, कुण्डयमानः, चुकुण्डिषमाणः, कुण्डिष्यमाणः, कुण्डयिष्यमाणः, चुकुण्डिषिष्यमाणः, चोकुण्ड्यमानः, चोकुण्डिष्यमाणः, इति शानचि रूपाणि-इति विशेषः। अन्यानि रूपाणि सर्वाण्यपि भौवादिककुण्ठतिवत् (209) ज्ञेयानि।

A. 'किञ्च स्वगात्रमवकुण्ठयतो महाहेः दर्पं चुखुण्ड विषमेष मुखाद्विवण्टन्॥' धा. का. 3, 19.



(214) "कुडि रक्षणे" (X-चुरादिः-1583. सक. सेट्. उभ.)

"वैकल्यदाहरक्षासु कुण्डेत् कुण्डेत कुण्डयेत्।' (श्लो-88) इति देवः। सर्वाण्यपि रूपाणि 'कुठि वेष्टने' (210) इति धातुवत् ज्ञेयानि।

(215) "कुण शब्दोपकरणयोः" (VI-तुदादिः-1335. सक. सेट्. पर.)

कुटादिः।

'आमन्त्रणे तु कुणयेत्, शब्दे चोपकृतौ कुणेत्।' (श्लो-93) इति देवः।

'कुट कौटिल्ये' (204) इति तौदादिकधातुवत् शुद्धात् ण्यन्तात् सन्नन्तात् यङन्ताच्च सर्वाणि रूपाणि ज्ञेयानि।

(216) "कुण आमन्त्रणे" (X-चुरादिः-1894. सक. सेट्. उभ.)

अदन्तः।

'आमन्त्रणे तु कुणयेत्, शब्दे चोपकृतौ कुणेत्।' (श्लो-93) इति देवः।

[1]कुणकः-णिका, चुकुणयिषकः-षिका;
कुणयिता-त्री, चुकुणयिषिता-त्री;
[A]कुणयन्-न्ती, चुकुणयिषन्-न्ती;
कुणयिष्यन्-न्ती-ती, चुकुणयिषिष्यन्-न्ती-ती;
कुणयमानः, चुकुणयिषमाणः;
कुणयिष्यमाणः, चुकुणयिषिष्यमाणः;
कुण्-कुणौ-कुणः; —
[2]कुणितम्-तः, चुकुणयिषितः-तवान्;
कुणः, चुकुणयिषुः;
कुणयितव्यम्, चुकुणयिषितव्यम्;
[3]कुणनीयम्, चुकुणयिषणीयम्;
कुण्यम्, चुकुणयिष्यम्;
ईषत्कुणः-दुष्कुणः-सुकुणः; —

1. अतो लोपस्य स्थानिवद्भावात् लघूपधगुणो न।
2. 'निष्ठायां सेटि' (6-4-52) इति णिलोपः।
3. 'णेरनिटि' (6-4-51) इति णिलोपः।
A. 'इत्यूचे स हि केतयन् परिजनान्, सेनापतीन् ग्रामयन्, स्वामात्यान् कुणयन् भटांश्च गुणयन् नृणां मुदं स्तेनयन्॥' धा. का. 3-57.

कुण्यमानः, चुकुणयिष्यमाणः ;
कुणः, चुकुणयिषः ;
कुणयितुम्, चुकुणयिषितुम् ;
कुणना, चुकुणयिषा ;
कुणनम्, चुकुणयिषणम् ;
कुणयित्वा, चुकुणयिषित्वा ;
[1]प्रकुणय्य, प्रचुकुणयिष्य ;
कुणम् २, } चुकुणयिषम् २ ; }
कुणयित्वा २, } चुकुणयिषित्वा २. }

(217) "कुत्स अवक्षेपणे" (X-चुरादिः-1698. सक. सेट्. आत्म.)

आकुस्मीयः ।

कुत्सकः-त्सिका, चुकुत्सयिषकः-षिका ;[2]
कुत्सयिता-त्री, चुकुत्सयिषिता-त्री ;
कुत्सयमानः, चुकुत्सयिषमाणः ;
कुत्सयिष्यमाणः, चुकुत्सयिषिष्यमाणः ;
[3]कुत्-कुत्सौ-कुत्सः ; —
[4]कुत्सितम्-तः, चुकुत्सयिषितः-तवान् ;
कुत्सः, [5]कुत्सनः, [6]कौत्सः ; चुकुत्सयिषुः,
कुत्सयितव्यम्, चुकुत्सयिषितव्यम् ;
कुत्सनीयम्, चुकुत्सयिषणीयम् ;
[A]कुत्स्यम्, चुकुत्सयिष्यम् ;
ईषत्कुत्सः-दुष्कुत्सः-सुकुत्सः ; —

1. 'ल्यपि लघुपूर्वात्' (6-4-56) इति णेरयादेशः ।
2. अनेकाच्त्वाद्धातोः, 'धातोरेकाच—' (3-1-22) इति यङ् न ।
3. 'संयोगान्तस्य लोपः' (8-2-23) इति सकारलोपः ।
4. 'निष्ठायां सेटि' (6-4-52) इति णेर्लोपः ।
5. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः ।
6. कुत्सः=तन्नामा ऋषिः । तस्यापत्यमित्यर्थे ऋष्यण् ।
A. 'कुत्स्या हि गालनपरा इव कष्टमेते दुष्कीर्तिभालनपराः खलु कूटवृत्त्या ।' धा. का. 3. 36.



कुत्स्यमानः, चुकुत्सयिष्यमाणः ;
कुत्सः, चुकुत्सयिषः ;
कुत्सयितुम्, चुकुत्सयिषितुम् ;
कुत्सना, [1]कुत्सा, चुकुत्सयिषा ;
कुत्सनम्, चुकुत्सयिषणम् ;
कुत्सयित्वा, चुकुत्सयिषित्वा ;
प्रकुत्स्य, प्रचुकुत्सयिष्य ;
कुत्सम् २, } चुचुत्सयिषम् २ ; }
कुत्सयित्वा २, } चुकुत्सयिषित्वा २. }

(218) "कुथ पूतीभावे" (IV-दिवादिः-1118. अक. सेट्. पर.)

पूतीभावः=दौर्गन्ध्यम् इति **सिद्धान्तकौमुदी** । पवित्रीकरणमिति **तत्त्वबोधिनी** ।

'कुथ्नाति कुन्थेत् संक्लेशे, पूतीभावे तु कुथ्यति ॥' (श्लो-38) इति **देवः** ।

कोथकः-थिका, कोथकः-थिका, [2]चुकुथिषकः-चुकोथिषकः-षिका, चोकुथकः-थिका ;

कोथिता-त्री, कोथयिता-त्री, चुकुथिषिता-त्री, चुकोथिषिता-त्री, चोकुथिता-त्री;

[3]कुथ्यन्[A]-[4]न्ती, कोथयन्-न्ती, चुकुथिषन्-चुकोथिषन्-न्ती ; —

1. 'यूनश्च **कुत्सायाम्**' (वा. 4-1-165) इत्यत्र निर्देशबलात् ण्यन्तादपि बाहुलकात् भावे स्त्रियामङ् । केचित्तु—'अनित्यण्यन्ताश्चुरादयः' इत्याश्रित्य **कुत्सा**—'**कुत्सितव्यमिदं** ज्ञेयम्—' इत्यादिप्रयोगाणां साधुत्वमाचक्षते । 'चिन्तिपूजिकथिकुम्बिचर्चश्च' (3-3-105) इत्यत्र चकारस्यानुक्तसमुच्चयार्थकत्वात् युजपवादोऽङ्—इति **क्षीरस्वामी** ।
2. 'रलो व्युपधात्—' (1-2-26) इति सनि कित्त्वविकल्पः ।
3. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन् । श्यनः शित्त्वात् 'सार्वधातुकमपित्' (1-2-4) इति ङित्त्वम् । तेनाङ्गस्य गुणो न ।
4. 'शप्श्यनोर्नित्यम्' (7-1-81) इति नुम् ।
A. 'तं प्लुष्यद्दृष्टिनृत्यद्वृषमपि च गतत्रासमुत्कुथ्यदङ्गं पोथ्यं प्रोचे स्वरेण स्वजनविगुधितं क्षिप्यता पुष्पमाध्वीम् ॥' धा. का. 2-56.

कोथिष्यन्-न्ती-ती, कोथयिष्यन्-न्ती-ती, चुकुथिषिष्यन्-चुकोथिषिष्यन्-न्ती-ती ;

— कोथयमानः, कोथयिष्यमाणः, चोकुथ्यमानः, चोकुथिष्यमाणः ;

कुत्-कुथ्-कुथौ-कुथः ; — — —

कुथितम् तः, कोथितः-तम्, चुकुथिषितः-चुकोथिषितः, चोकुथितः-तवान् ;

[1]कुथः, कोथः, चुकुथिषुः-चुकोथिषुः, चोकुथः ;

कोथितव्यम्, कोथयितव्यम्, चुकुथिषितव्यम्-चुकोथिषितव्यम्, चोकुथितव्यम् ;

कोथनीयम्, कोथनीयम्, चुकुथिषणीयम्-चुकोथिषणीयम्, चोकुथनीयम् ;

कोथ्यम्, कोथ्यम्, चुकुथिष्यम्-चुकोथिष्यम्, चोकुथ्यम् ;

ईषत्कोथः-दुष्कोथः-सुकोथः ; — — —

कुथ्यमानः, कोथ्यमानः, चुकुथिष्यमाणः-चुकोथिष्यमाणः, चोकुथ्यमानः ;

कोथः, कोथः, चुकुथिषः-चुकोथिषः, चोकुथः ;

कोथितुम्, कोथयितुम्, चुकुथिषितुम्-चुकोथिषितुम्, चोकुथितुम् ;

कुत्तिः, कोथना, चुकुथिषा-चुकोथिषा, चोकुथा ;

कोथनम् ; कोथनम्, चुकुथिषणम्-चुकोथिषणम्, चोकुथनम् ;

[2]कुथित्वा-कोथित्वा, कोथयित्वा, चुकुथिषित्वा-चुकोथिषित्वा, चोकुथित्वा;

प्रकुथ्य, प्रकोथ्य, प्रचुकुथिष्य-प्रचुकोथिष्य, प्रचोकुथ्य ;

कोथम् २, कुथित्वा २, कोथित्वा २ } कोथम् २, कोथयित्वा २, }

चुकुथिषम् २-चुकोथिषम् २, चुकुथिषित्वा २-चुकोथिषित्वा २, } चोकुथम् २, चोकुथित्वा २. }

## (219) "कुथ संश्लेषणे" (IX-क्र्यादिः-1514. अक. सेट्. पर.) [अ]

संक्लेशे—इत्येके । 'कुथ्नाति कुन्थेत् संक्लेशे, पूतीभावे तु कुथ्यति ॥' (श्लो-98) इति **देवः** ।

कोथकः-थिका, कोथकः-थिका, चुकुथिषकः-चुकोथिषकः-षिका, चोकुथकः-थिका ;

---

1. 'इगुपध—' (3-1-135) इति कर्तरि कः प्रत्ययः । गजपृष्ठस्थितरत्नकम्बलस्य नाम । कुशतृणम् । 'कुथास्तरणतल्पेषु किं स्यात् सुखतरं ततः ।' **रामा. 2-30-14.**
2. 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः ।

अ. '**कुन्थ** संश्लेषणे' इत्यस्य **दुर्ग**सम्मतः पाठ एवम् ।



इत्यादीनि सर्वाण्यपि रूपाणि पूर्वलिखित (217) **कुथ**धातुवत् ज्ञेयानि । शतरि परं [1]कुथ्नन्-कुथ्नती, इति रूपम् इति विशेषः । विकुथ्य[A] ।

## (220) "कुथि हिंसासंक्लेशनयोः" (I-भ्वादिः-43. सक. सेट्. पर.)

'कुथ्नाति कुन्थेत् संक्लेशे, पूतीभावे तु कुथ्यति ।' (श्लो-98) इति **देवः** ।

[2]कुन्थकः[B]-न्थिका, कुन्थकः-न्थिका, चुकुन्थिषकः-षिका, चोकुन्थकः-न्थिका ;

कुन्थिता-त्री, कुन्थयिता-त्री, चुकुन्थिषिता-त्री, चोकुन्थिता-त्री ;

[3]व्यतिकुन्थन्-न्ती, कुन्थयन्-न्ती, चुकुन्थिषन्-न्ती ; —

कुन्थिष्यन्-न्ती-ती, कुन्थयिष्यन्-न्ती-ती, चुकुन्थिषिष्यन्-न्ती-ती ; —

— कुन्थयमानः, कुन्थयिष्यमाणः, [4]चोकुन्थ्यमानः, चोकुन्थिष्यमाणः ;

[5]कुन्-कुन्थौ-कुन्थः ; — — —

कुन्थितम्-तः, कुन्थितः, चुकुन्थिषितः, चोकुन्थितः-तवान् ;

कुन्थः, कुन्थः, चुकुन्थिषुः, चोकुन्थः ;

कुन्थितव्यम्, कुन्थयितव्यम्, चुकुन्थिषितव्यम्, चोकुन्थितव्यम् ;

कुन्थनीयम्, कुन्थनीयम्, चुकुन्थिषणीयम्, चोकुन्थनीयम् ;

कुन्थ्यम्, कुन्थ्यम्, चुकुन्थिष्यम्, चोकुन्थ्यम् ;

ईषत्कुन्थः-दुष्कुन्थः-सुकुन्थः ; — —

कुन्थ्यमानः, कुन्थ्यमानः, चुकुन्थिष्यमाणः, चोकुन्थ्यमानः ;

कुन्थः, कुन्थः, चुकुन्थिषः, चोकुन्थः ;

---

1. 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्नाप्रत्ययः । 'श्नाभ्यस्तयोरातः' (6-4-112) इत्याकारलोपः । श्नः शित्त्वात् अपित्त्वाच्च 'सार्वधातुकमपित्' (1-2-4) इति ङिद्भावात् अङ्गस्य गुणो न ।
2. 'इदितो नुम् धातोः' (7-1-58) इति नुम् ।
3. 'न गतिहिंसार्थेभ्यः' (1-3-15) इति कर्मव्यतीहारे तङ्निषेधः ।
4. इदित्त्वात् 'अनिदिताम्—' (6-4-24) इति नलोपो न ।
5. 'संयोगान्तस्य लोपः' (8-2-23) इति थकारलोपः ।

A. 'तद्ग्रन्थनं परिहरन् गतिभिर्विकुथ्य पृष्ठे करोन्मृदितपुच्छमकर्षदेनम् ।' धा. का. 3-10.

B. 'ममन्थ विश्वं सुजनानकुन्थकान् प्रपुन्थ्य बन्धूनपि लुन्थति स्म यः ।' धा. का. 1-7.

कुन्थितुम्, कुन्थयितुम्, चुकुन्थिषितुम्, चोकुन्थितुम्;
[1]कुन्था, कुन्थना, चुकुन्थिषा, चोकुन्था;
कुन्थनम्, कुन्थनम्, चुकुन्थिषणम्, चोकुन्थनम्;
कुन्थित्वा, कुन्थयित्वा, चुकुन्थिषित्वा, चोकुन्थित्वा;
प्रकुन्थ्य, प्रकुन्थ्य, विचुकुन्थिष्य, सञ्चोकुन्थ्य;
[2]खड्गोपकुन्थं, खड्गेनोपकुन्थं, खड्गेनोपकुन्थ्य [वा शत्रुं मारयति];
कुन्थम् २, कुन्थित्वा २, } कुन्थम् २, कुन्थयित्वा २, } चुकुन्थिषम् २, चुकुन्थिषित्वा २, } चोकुन्थम् २; चोकुन्थित्वा २. }

## (221) "कुद्रि अनृतभाषणे" (X-चुरादिः-1539. सक. सेट्. उभ.)

### इदित्त्वाण्णिचो वैकल्पिकत्वम्।

कुन्द्रकः-न्द्रिका, चुकुन्द्रयिषकः-षिका, [3]कुन्द्रकः-न्द्रिका, चुकुन्द्रिषकः-षिका, चोकुन्द्रकः-न्द्रिका, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिक-कुण्ठयतिवत् (210) बोध्यानि।

## (222) "कुन्च कौटिल्याल्पीभावयोः"

(I-भ्वादिः-185. सक. सेट्. पर.)

'गतेः कौटिल्ये, द्रव्यस्याल्पत्वे च–' इति क्षीरस्वामी। नोपधोऽयं धातुः।
कुञ्चकः-ञ्चिका, कुञ्चकः-ञ्चिका, चुकुञ्चिषकः-षिका, चोकुञ्चकः-ञ्चिका;
कुञ्चिता-त्री, कुञ्चयिता-त्री, चुकुञ्चिषिता-त्री, चोकुञ्चिता-त्री;
कुञ्चन्-न्ती, कुञ्चयन्-न्ती, चुकुञ्चिषन्-न्ती; —
कुञ्चिष्यन्-न्ती-ती, कुञ्चयिष्यन्-न्ती-ती, चुकुञ्चिषिष्यन्-न्ती-ती; —
—— कुञ्चयमानः, कुञ्चयिष्यमाणः, चोकुच्यमानः, चोकुञ्चिष्यमाणः;
कुक्-कुञ्चौ-कुञ्चः; — — —

1. 'गुरोश्च हलः' (3-3-103) इत्यप्रत्ययः।
2. 'हिंसार्थानां च समानकर्मकाणाम्' (3-4-48) इति णमुल्। 'तृतीयाप्रभृतीनि—' (2-2-21) इति समासविकल्पः।
3. णिजभावपक्षे शुद्धाद्धातोः, सनि यङि च क्रमेण रूपाणि।



[1]निकुचितम्-तः,[A] कुञ्चितः, चुकुञ्चिषितः, चोकुञ्चितः-तवान्;
कुञ्चः, कुञ्चः, चुकुञ्चिषुः, चोकुञ्चः;
कुञ्चितव्यम्, कुञ्चयितव्यम्, चुकुञ्चिषितव्यम्, चोकुञ्चितव्यम्;
कुञ्चनीयम्, कुञ्चनीयम्, चुकुञ्चिषणीयम्, चोकुञ्चनीयम्;
[2]कुञ्च्यम्, कुञ्च्यम्, चुकुञ्चिष्यम्, चोकुञ्च्यम्;
ईषत्कुञ्चः-दुष्कुञ्चः-सुकुञ्चः; — —
[3]कुच्यमानः, कुञ्च्यमानः, चुकुञ्चिष्यमाणः, चोकुञ्च्यमानः;
कुञ्चः, कुञ्चः, चुकुञ्चिषः, चोकुञ्चः;
कुञ्चितुम्, कुञ्चयितुम्, चुकुञ्चिषितुम्, चोकुञ्चितुम्;
कुञ्चा, [4]निकुचितिः, कुञ्चना, चुकुञ्चिषा, चोकुञ्चा;
कुञ्चनम्, कुञ्चनम्, चुकुञ्चिषणम्, चोकुञ्चनम्;
[5]कुञ्चित्वा, कुञ्चयित्वा, चुकुञ्चिषित्वा, चोकुञ्चित्वा;
सङ्कुच्य, सङ्कुञ्च्य, सञ्चुकुञ्चिष्य, सञ्चोकुञ्च्य;
कुञ्चम् २, कुञ्चित्वा २, } कुञ्चम् २, कुञ्चयित्वा २, } चुकुञ्चिषम् २, चुकुञ्चिषित्वा २, } चोकुञ्चम् २; चोकुञ्चित्वा २. }

## (223) "कुन्थ संश्लेषणे" (IX-क्र्यादिः-1514. सक. सेट्. पर.)

'सङ्क्लेशने' इत्येके। 'कुथ्नाति कुन्थेत् संक्लेशे, पूतीभावे तु कुथ्यति॥' (श्लो. 98) इति देवः।

1. 'अनिदितां हल—' (6-4-24) इति नलोपः।
   'नकारजावनुस्वारपञ्चमौ झलि धातुषु।
   सकारजश्शकारश्चेषाट्टवर्गस्तवर्गजः॥'
   इति भाष्योक्त्या अत्र ञकारः नकारस्थानिकः। तेन नलोपः। सन्निपातपरिभाषाविरोधात् गुणो न, उदुपधत्वसम्पादनद्वारा कित्त्वमुपजीव्य प्रवृत्तो नलोपः अकित्त्वस्य प्रयोजको न भवति।
2. 'न क्वादेः' (7-3-59) इति, 'निष्ठायामनिट-' (वा-7-3-52) इति वा कुत्वं न।
3. 'अनिदितां—' (6-4-24) इति नलोपः।
4. बाहुलकात् 'क्तिन् आबादिभ्यः' (वा. 3-3-94) इति क्तिन्नपि। यद्वा क्तिच्। 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (वा. 7-2-9) इति इण्णिषेधपर्युदासात् इट् भवति। नलोपः।
5. 'न क्त्वा सेट्' (1-2-18) इति कित्त्वनिषेधात् नलोपो न।
A. 'चुकोच यत्रोत्कुचिताङ्गमुन्मुदः क्रौञ्चोऽपि लुञ्चन् हृदि सम्यगार्तताम्॥' धा. का. 1-25.

कुन्थकः-न्थिका, कुन्थकः-न्थिका, चुकुन्थिषकः-षिका, चोकुन्थकः-न्थिका ;
कुन्थिता-त्री, कुन्थयिता-त्री, चुकुन्थिषिता-त्री, चोकुन्थिता-त्री ;
[1]कुथ्नन्-ती, कुन्थयन्-न्ती, चुकुन्थिषन्-न्ती ; —
कुन्थिष्यन्-न्ती-ती, कुन्थयिष्यन्-न्ती-ती, चुकुन्थिषिष्यन्-न्ती-ती ; —
[2]व्यतिकुथ्नानः, व्यतिकुन्थिष्यमाणः, कुन्थयमानः, कुन्थयिष्यमाणः,
चोकुथ्यमानः, चोकुन्थिष्यमाणः ;
कुत्-कुन्थौ-कुन्थः ; — — —
[3]कुथितम्-तः, कुन्थितः, चुकुन्थिषितः, चोकुन्थितः-तवान् ;
कुन्थः, कुन्थः, चुकुन्थिषुः, चोकुन्थः ;
कुन्थितव्यम्, कुन्थयितव्यम्, चुकुन्थिषितव्यम्, चोकुन्थितव्यम् ;
कुन्थनीयम्, कुन्थनीयम्, चुकुन्थिषणीयम्, चोकुन्थनीयम् ;
कुन्थ्यम्, कुन्थ्यम्, चुकुन्थिष्यम्, चोकुन्थ्यम् ;
ईषत्कुन्थः-दुष्कुन्थः-सुकुन्थः ; — —
कुथ्यमानः, कुन्थ्यमानः, चुकुन्थिष्यमाणः, चोकुन्थ्यमानः ;
कुन्थः, कुन्थः, चुकुन्थिषः, चोकुन्थः ;
कुन्थितुम्, कुन्थयितुम्, चुकुन्थिषितुम्, चोकुन्थितुम् ;
कुन्था, कुन्थना, चुकुन्थिषा, चोकुन्था ;
कुन्थनम्, कुन्थनम्, चुकुन्थिषणम्, चोकुन्थनम् ;
[4]कुथित्वा-कुन्थित्वा, कुन्थयित्वा, चुकुन्थिषित्वा, चोकुन्थित्वा ;
प्रकुथ्य-[A]विकुथ्य, प्रकुन्थ्य, प्रचुकुन्थिष्य, प्रचोकुन्थ्य ;
कुन्थम् २, कुथित्वा २, कुन्थित्वा २, } कुन्थम् २, कुन्थयित्वा २, } चुकुन्थिषम् २, चुकुन्थिषित्वा २, } चोकुन्थम् २ ; चोकुन्थित्वा २. }

1. 'क्र्यादिभ्यः श्ना' (3-1-81) इति श्ना विकरणप्रत्ययः। श्नः शित्त्वात् अपित्त्वाच्च ङित्त्वात् नलोपः। 'श्नाभ्यस्तयोः—' (6-4-112) इत्याकारलोपः।
2. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति आत्मनेपदम्।
3. 'अनिदितां—' (6-4-24) इति नलोपः।
4. 'नोपधात् थफान्ताद्वा' (1-2-23) इति क्त्वाप्रत्ययस्य कित्त्वविकल्पः।
A. 'तद्ग्रन्थनं परिहरन् गतिभिर्**विकुथ्य** पृष्ठेऽकरोन्मृदितपुच्छमकर्षदेनम्।'
धा. का. 3-10.



## (224) "कुप क्रोधे" (IV-दिवादिः-1233. अक. सेट्. पर.)

'दिवादेः कुप्यति क्रोधे, भाषायां कोपयेत् कुपेः॥' (श्लो-136) इति देवः।

कोपकः-पिका, कोपकः-पिका, [1]चुकुपिषकः-चुकोपिषकः-षिका,
चोकुपकः-पिका ;
कोपिता-त्री, कोपयिता-त्री, चुकुपिषिता-चुकोपिषिता-त्री, चोकुपिता-त्री ;
[2]कुप्यन्-न्ती, कोपयन्-न्ती, चुकुपिषन्-चुकोपिषन्-न्ती ; —
कोपिष्यन्-न्ती-ती, कोपयिष्यन्-न्ती-ती, चुकु[को]पिषिष्यन्-न्ती-ती ; —
[3]व्यतिकुप्यमानः, कोपयमानः, चोकुप्यमानः;
व्यतिकोपिष्यमाणः, कोपयिष्यमाणः, चोकुपिष्यमाणः ;
कुप्-कुपौ-कुपः ; — — —
कुपितम्-तः कोपितः, चुकुपिषितः-चुकोपिषितः, चोकुपितः-तवान् ;
[4]कुपः, [5]कोपनः[A], प्रकोपी[6], चुकुपिषुः-चुकोपिषुः, चोकुपः,
कोपितव्यम्, कोपयितव्यम्, चुकुपिषितव्यम्-चुकोपिषितव्यम्, चोकुपितव्यम् ;
[7]प्रकोपणीयम्, प्रकोपनीयम् } कोपनीयम्, चुकुपिषणीयम्-चुकोपिषणीयम्, चोकुपनीयम् ;
कोप्यम्, कोप्यम्, चुकुपिष्यम्-चुकोपिष्यम्, चोकुप्यम् ;
ईषत्कोपः-दुष्कोपः-सुकोपः ; — —
कुप्यमानः, कोप्यमानः, चुकुपिष्यमाणः-चुकोपिष्यमाणः, चोकुप्यमानः ;
[B]कोपः, कोपः, चुकुपिषः-चुकोपिषः, चोकुपः ;
कुप्तिः, कोपना, चुकुपिषा-चुकोपिषा, चोकुपा ;

1. 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः। एवं सन्नन्ते सर्वत्र ज्ञेयम्।
2. 'दिवादिभ्यः श्यन्' (3-1-69) इति श्यन्। श्यनः ङित्त्वादङ्गस्य गुणो न।
3. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति कर्मव्यतीहारे शानच्।
4. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः प्रत्ययः।
5. '**क्रुधम**ण्डार्थेभ्यश्च' (3-2-151) इति ताच्छीलिको युच्।
6. 'सुप्यजातौ णिनिः—' (3-2-78) इति ताच्छीलिको णिनिः।
7. हलश्चेजुपधात्' (8-4-31) इति विभाषा णत्वम्।
A. 'कुर्वन्ति **कोपनं** तारा मण्डना गगनस्य माम्॥' भ. का. 7-16.
B. 'रुष्यद्रिष्यदरातिडेपक विभो **कोपा**दिगोपो न ते
किं चायोप्यविरोपिलोपक न वा लोभादिसंक्षोभिता॥' धा. का. 2-67.

कोपितुम्, कोपयितुम्, चुकुपिषितुम्-चुकोपिषितुम्, चोकुपितुम्;

[A] प्रकोपणम् }
प्रकोपनम् } कोपनम्, चुकुपिषणम्-चुकोपिषणम्, चोकुपनम्;

कुपित्वा-कोपित्वा, कोपयित्वा, चुकुपिषित्वा-चुकोपिषित्वा, चोकुपित्वा;

प्रकुप्य, प्रकोप्य, प्रचुकुपिष्य-प्रचोकुपिष्य, प्रचोकुप्य;

कोपम् २ } कोपम् २ } चुकुपिषम् २-चुकोपिषम् २, }
कुपित्वा २ कोपित्वा २ } कोपयित्वा २ } चुकुपिषित्वा २-चुकोपिषित्वा २, }
चोकुपम् २; }
चोकुपित्वा २. }

**(225) "कुप भाषार्थः"** (X-चुरादिः-1780. सक. सेट्. उभ.) **आस्वदीयः।**

'दिवादेः कुप्यति क्रोधे, भाषार्थे कोपयेत् कुपेः॥' (श्लो-136) इति **देवः**। कोपकः-पिका, चुकोपयिषकः-षिका, कोपकः-पिका, चुकुपिषकः-षिका, चोकुपकः-पिका, इति रूपाणि सर्वत्र ज्ञेयानि। 'आ स्वदः सकर्मकात्' (गणसूत्रं चुरादौ) इति वचनेन कर्मान्वयसम्भवे ण्यन्तात्-सनि परे विशेषः। अन्यत्र अकर्मकात् शुद्धाद्धातोः सन्नन्तात् यङन्ताच्च पूर्वलिखित (224) दैवादिककुप्यतिवत् ज्ञेयानि। णिजभावपक्षे 'शेषात् कर्तरि—' (1-3-78) इति परस्मैपदमेव। शतरि कोपन्-न्ती इति रूपम्। ण्यन्तात् सनि तु— चुकोपयिषकः-षिका, चुकोपयिषिता-त्री, चुकोपयिषन्-न्ती, चुकोपयिषिष्यन्-न्ती-ती, चुकोपयिषमाणः, चुकोपयिषिष्यमाणः, चुकोपयिषितः-तवान्, चुकोपयिषुः, चुकोपयिषितव्यम्, चुकोपयिषणीयम्, चुकोपयिष्यम्, ईषच्चुकोपयिषः-दुश्चुकोपयिषः-सुचुकोपयिषः, चुकोपयिष्यमाणः, चुकोपयिषः, चुकोपयिषितुम्, चुकोपयिषा, चुकोपयिषणम्, चुकोपयिषित्वा, प्रचुकोपयिष्य, चुकोपयिषम् २, चुकोपयिषित्वा २, इति रूपाणीति विशेषः।

**(226) "कुबि आच्छादने"** (I-भ्वादिः-426. सक. सेट्. पर.)

'णिचि कुंबयतीति स्याच्छादने शपि कुम्बति॥' (श्लो-140) इति **देवः**। कुम्बकः-म्बिका, कुम्बकः-म्बिका, चुकुम्बिषकः-षिका, चोकुम्बकः-म्बिका,

A. 'कः कृत्वा रावणामर्षप्रकोपणमवद्यधीः।' भ. का. 9-105.



कुम्बिता-त्री, कुम्बयिता-त्री, चुकुम्बिषिता-त्री, चोकुम्बिता-त्री, [A]कुम्बितः; इत्यादीनि सर्वाण्यपि रूपाणि भौवादिककुठि (209) धातुवज्ज्ञेयानि।

**(227) "कुबि आच्छादने"** (X-चुरादिः-1656-सक. सेट्. उभ.)

'णिचि कुम्बयतीति स्यात्, छादने शपि कुम्बति॥' (श्लो. 140) इति **देवः**।

'**कुभि**' इत्येके।

स्त्रियां 'चिन्तिपूजिकथिकुम्बिचर्चश्च' (3-3-105) इति युजपवादो अङ्, **कुम्बा**-इति रूपम्। कुम्बकः-म्बिका, चुकुम्बयिषकः-षिका, कुम्बकः-म्बिका, चुकुम्बिषकः-षिका, चोकुम्बकः-म्बिका, इत्यादीनि सर्वाण्यपि रूपाणि चौरादिककुण्ठयतिवत् (210) ज्ञेयानि। इदित्करणात् णिचो वैकल्पिकत्वम्।

**(228) "कुमार क्रीडायाम्"** (X-चुरादिः-1878. अक. सेट्. उभ. **अदन्तः।**)

कुमारकः-रिका, चुकुमारयिषकः-षिका;
कुमारयिता-त्री, चुकुमारयिषिता-त्री;
[B]कुमारयन्-न्ती, चुकुमारयिषन्-न्ती;
कुमारयिष्यन्-न्ती-ती, चुकुमारयिषिष्यन्-न्ती-ती;
कुमारयमाणः, चुकुमारयिषमाणः;
कुमारयिष्यमाणः, चुकुमारयिषिष्यमाणः;
[1]कुमाः-कुमारौ-कुमारः; —
कुमारितम्-तः, चुकुमारयिषितः-तवान्;
कुमारः, चुकुमारयिषुः;
कुमारयितव्यम्, चुकुमारयिषितव्यम्;
कुमारणीयम्, चुकुमारयिषणीयम्;
कुमार्यम्, चुकुमारयिष्यम्;
ईषत्कुमारः-दुष्कुमारः-सुकुमारः; —
कुमार्यमाणः, चुकुमारयिष्यमाणः;

1. पदान्तत्वात् 'खरवसानयोर्विसर्जनीयः' (8-3-15) इति विसर्गः।

A. 'ऊर्ध्वप्रसर्पन्ति तु चर्विता मही दिक्कुंबितेऽर्के परिलुम्बितुताम्बुजे॥' धा. का. 1-55.

B. 'यो मत्क्षयं स्पृहयते मयि भामितेऽपि संसूचयत्यरिगुणांश्च मदन्नखेटी।
तं क्षोटितौजसमगोमितभूमिबद्धं शत्रौ **कुमारयति** मारयतोग्रसेनम्॥'
धा. का. 3-55.

कुमारः, चुकुमारयिषः ;
कुमारयितुम्, चुकुमारयिषितुम् ;
कुमारणा, चुकुमारयिषा ;
कुमारयित्वा, चुकुमारयिषित्वा ;
सङ्कुमार्य, सञ्चुकुमारयिष्य ;
कुमारम् २, कुमारयित्वा २, } चुकुमारयिषम् २ ; चुकुमारयिषित्वा २. }

(229) "कुर शब्दे" (VI-तुदादिः-1341. अक. सेट्. पर.)

कोरकः-रिका, कोरकः-रिका, [1]चुकुरिषकः-चुकोरिषकः-षिका, चोकूरकः-रिका ;
कोरिता-त्री, कोरयिता-त्री, चुकुरिषिता-चुकोरिषिता-त्री, चोकुरिता-त्री ;
[2]कुरन्-न्ती-ती, कोरयन्-न्ती, चुकुरिषन्-चुकोरिषन्-न्ती ; —
कोरिष्यन्-न्ती-ती, कोरयिष्यन्-न्ती-ती, चुकुरिषिष्यन्-चुकोरिषिष्यन्-न्ती-ती ;
[3]व्यतिकुरमाणः, कोरयमाणः, —— [4]चोकूर्यमाणः ;
व्यतिकोरिष्यमाणः, कोरयिष्यमाणः, — चोकुरिष्यमाणः ;
[5]कूः-कुरौ-कुरः ; — — —
कुरितम्-तः[A], कोरितः, चुकुरिषितः-चुकोरिषितः, चोकुरितः-तवान् ;
[6]कुरः, [7]कोरणः, कोरः, चुकुरिषुः-चुकोरिषुः, चोकुरः ;

---

1. 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः। एवं क्त्वाप्रत्ययेऽपि।
2. 'तुदादिभ्यः शः' (3-1-77) इति शः। 'आच्छीनद्योर्नुम्' (7-1-80) इति नुम् वा।
3. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच्।
4. 'हलि च' (8-2-77) इति दीर्घः।
5. 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घे विसर्गः।
6. 'इगुपधज्ञा—' (3-1-135) इति कर्तरि कः।
7. 'चलनशब्दार्थादकर्मकाद्युच्' (3-2-148) इति ताच्छीलिकः युच्।

A. 'विश्रोणनेष्वघुणिता मदघूर्णदक्षाः युद्धे सुरानपि खरोत्कुरिताः खुरन्तः॥'
धा. का. 2-76.



कोरितव्यम्, कोरयितव्यम्, चुकुरिषितव्यम्-चुकोरिषितव्यम्, चोकुरितव्यम् ;
कोरणीयम्, कोरणीयम्, चुकुरिषणीयम्-चुकोरिषणीयम्, चोकुरणीयम् ;
कूर्यम्, कोर्यम्, चुकुरिष्यम्-चुकोरिष्यम्, चोकूर्यम् ;
ईषत्कोरः-दुष्कोरः-सुकोरः ; — —
कूर्यमाणः, कोर्यमाणः, चुकुरिष्यमाणः-चुकोरिष्यमाणः, चोकूर्यमाणः ;
कोरः, कोरः, चुकुरिषः-चुकोरिषः, चोकुरः ;
कोरितुम्, कोरयितुम्, चुकुरिषितुम्-चुकोरिषितुम्, चोकुरितुम् ;
कूर्तिः, कोरणा, चुकुरिषा-चुकोरिषा, चोकुरा ;
कोरणम्, कोरणम्, चुकुरिषणम्-चुकोरिषणम्, चोकुरणम् ;
कुरित्वा-कोरित्वा, कोरयित्वा, चुकुरिषित्वा-चुकोरिषित्वा, चोकुरित्वा ;
विकूर्य, विकोर्य, विचुकुरिष्य-विचुकोरिष्य, विचोकूर्य ;
कोरम् २, कुरित्वा २, कोरित्वा २, } कोरम् २, कोरयित्वा २, } चुकुरिषम् २-चुकोरिषम् २, चुकुरिषित्वा २-चुकोरिषित्वा २, }
चोकुरम् २ ; चोकुरित्वा २. }

(230) "कुर्द क्रीडायामेव" (I-भ्वादिः-21. अक. सेट्. आत्म.) [अ]

[1]कूर्दकः-र्दिका, कूर्दकः-र्दिका, चुकूर्दिषकः-षिका, चोकूर्दकः-र्दिका ;
कूर्दिता-त्री, कूर्दयिता-त्री, चुकूर्दिषिता-त्री, चोकूर्दिता-त्री ;
— कूर्दयन्-न्ती, कूर्दयिष्यन्-न्ती-ती ; ——
कूर्दमानः, कूर्दयमानः, चुकूर्दिषमाणः, चोकूर्द्यमानः ;
कूर्दिष्यमाणः, कूर्दयिष्यमाणः, चुकूर्दिषिष्यमाणः, चोकूर्दिष्यमाणः ;
[2]कूर्त्-कूर्द्-कूर्दौ-कूर्दः ; — — —

---

[अ] एवकारेण धातूनामनेकार्थत्वं प्रतीयते—इति भाष्ये।

1. 'उपधायां च' (8-2-78) इति दीर्घः। 'टु ओ स्फूर्जा वज्रनिर्घोषे' (1-भ्वादिः 235) इत्यत्र, 'स्फुर्जा' इति ह्रस्वनिर्देशेऽपि, 'र्वोरुपधाया दीर्घ इकः' (8-2-76) इति दीर्घे सिद्धे, दीर्घघटितपाठः, 'र्वोरुपधायाः–' (8-2-76) इत्यस्य पाक्षिकत्वे ज्ञापकः। अतः कुर्दकः-कूर्दकः इत्युभयपि रूपं साधु। एवं गुर्दादि (414) धातुष्वपि बोध्यम्, इति केचित्।
2. 'रात् सस्य' (8-2-24) इति नियमात् दकारस्य संयोगान्तलोपो न।

कूर्दितम्-तः, कूर्दितः, चुकूर्दिषितः, चोकूर्दितः-तवान् ;
कूर्दः, [1]कूर्दनः, कूर्दः, चुकूर्दिषुः, चोकूर्दः ;
कूर्दितव्यम्, कूर्दयितव्यम्, चुकूर्दिषितव्यम्, चोकूर्दितव्यम् ;
कूर्दनीयम्, कूर्दनीयम्, चुकूर्दिषणीयम्, चोकूर्दनीयम् ;
कूर्द्यम्, कूर्द्यम्, चुकूर्दिष्यम्, चोकूर्द्यम् ;
ईषत्कूर्दः-दुष्कूर्दः-सुकूर्दः ; — —
कूर्द्यमानः, कूर्द्यमानः, चुकूर्दिष्यमाणः, चोकूर्द्यमान ;
कूर्दः, कूर्दः, चुकूर्दिषः, चोकूर्दः ;
कूर्दितुम्, कूर्दयितुम्, चुकूर्दिषितुम्, चोकूर्दितुम् ;
कूर्दा, कूर्दना, चुकूर्दिषा, चोकूर्दा ;
कूर्दनम्, कूर्दनम्, चुकूर्दिषणम्, चोकूर्दनम् ;
कूर्दित्वा, कूर्दयित्वा, चुकूर्दिषित्वा, चोकूर्दित्वा ;
प्रकूर्द्य, प्रकूर्द्य, प्रचुकूर्दिष्य, प्रचोकूर्दिष्य ;
कूर्दम् २, कूर्दित्वा २, } कूर्दम् २, कूर्दयित्वा २, } चुकूर्दिषम् २, चुकूर्दिषित्वा २, } चोकूर्दम् २; चोकूर्दित्वा २. }

## (231) "कुल संस्त्याने बन्धुषु च"

(I-भ्वादिः-842. अक. सेट्. पर.) ज्वलादिः । 'सन्ताने' इत्येके ।

**संस्त्यानम्**=सङ्घातः । **बन्धुशब्देन** तद्व्यापारो विवाहादिः लक्ष्यते ।

कोलकः-लिका, कोलकः-लिका, [2]चुकुलिषकः-चुकोलिषकः-षिका, चोकुलकः-लिका ;
कोलिता-त्री, कोलयिता-त्री, चुकुलिषिता-चुकोलिषिता-त्री, चोकुलिता-त्री ;
कोलन्-न्ती, कोलयन्-न्ती, चुकुलिषन्-चुकोलिषन्-न्ती ; —
कोलिष्यन्-न्ती-ती, कोलयिष्यन्-न्ती-ती, चुकुलिषिष्यन्-चुकोलिषिष्यन्-न्ती-ती ;
[3]व्यतिकोलमानः, कोलयमानः, — चोकुल्यमानः ;

1. 'अनुदात्तेतश्च हलादेः' (3-2-149) इति युच् ताच्छीलिकः ।
2. 'रलो व्युपधात्—' (1-2-26) इति कित्त्वविकल्पः । एवं क्त्वाप्रत्ययेऽपि ।
3. 'कर्तरि कर्मव्यतीहारे' (1-3-14) इति शानच् ।



व्यतिकोलिष्यमाणः, कोलयिष्यमाणः, — चोकुलिष्यमाणः ;
कुल्-कुलौ-कुलः ; — — —
[1]कुलितम् / कोलितम् } तः, कोलितः, चुकुलिषितः-चुकोलिषितः, चोकुलितः-तवान् ;
[2]कुलः-कोलः, कुलम्, चुकुलिषुः-चुकोलिषुः, चोकुलः ;
कोलितव्यम्, कोलयितव्यम्, चुकुलिषितव्यम्-चुकोलिषितव्यम्, चोकुलितव्यम्,
कोलनीयम्, [3]कोलनीयम्, चुकुलिषणीयम्-चुकोलिषणीयम्, चोकुलनीयम् ;
कोल्यम्, कोल्यम्, चुकुलिष्यम्-चुकोलिष्यम्, चोकुल्यम् ;
ईषत्कोलः-दुष्कोलः-सुकोलः ; — —
कुल्यमानः, कोल्यमानः, चुकुलिष्यमाणः-चुकोलिष्यमाणः, चोकुल्यमानः ;
[4]कोलः, कोलः, चुकुलिषः-चुकोलिषः, चोकुलः ;
कोलितुम्, कोलयितुम्, चुकुलिषितुम्-चुकोलिषितुम्, चोकुलितुम् ;
कुलितः, कोलना, चुकुलिषा-चुकोलिषा, चोकुला ;
कोलनम्, कोलनम्, चुकुलिषणम्-चुकोलिषणम्, चोकुलनम् ;
कुलित्वा / कोलित्वा } कोलयित्वा, चुकुलिषित्वा-चुकोलिषित्वा, चोकुलित्वा ;
प्रकुल्य, प्रकोल्य, प्रचुकुलिष्य-प्रचुकोलिष्य, प्रचोकुल्य ;
कोलम् २, कुलित्वा २-कोलित्वा २, } कोलम् २, कोलयित्वा २, } चुकुलिषम् २, चुकुलिषित्वा २,
[5]कुलालः. { चुकोलिषम् २, चुकोलिषित्वा २, } चोकुलम् २; चोकुलित्वा २ ; }

1. 'उदुपधात् भावादिकर्मणोरन्यतरस्याम्' (1-2-21) इति कित्त्वविकल्पः ।
2. '**ज्वलिति**कसन्तेभ्यो णः' (3-1-140) इति णो वा । णप्रत्ययाभावपक्षे 'इगुपधज्ञा—' (3-1-135) इति कः प्रत्ययः । पचाद्यचोऽपवादः ।
3. 'णेरनिटि' (6-4-51) इति णिलोपः ।
4. 'पुंसि संज्ञायां घः प्रायेण' (3-3-118) इति घः संज्ञायाम् । **कोलो** वराहः ।
5. औणादिके (द. उ. 8-115) कालच् प्रत्यये रूपम् । **कुलालः**=कुम्भकारः ।

